# The Kashmir Series Of Texts & Studies.

No. 73

## KARMAKANDA-KRAMAVALI

*By*

SRI SOMASHAMBHU

(Outlines briefly the procedure
of Shaivaistic Sandhya,
Diksha and other
itual.)



P

**General Editor.**
**J. D. ZADOO.**

1947 A.D.
RESEARCH DEPARTMENT
Srinagar.

# The Kashmir Series Of Texts & Studies.

No. LXXIII.

# KARMAKANDA-KRAMAVALI

By

*Sri Somashambhu*

(Outlines briefly the procedure of
Shaivaistic Sandhya, Diksha,
& other ritual.)

Edited Critically
By
Pandit Jagaddhar Zadoo, M.A., M. O.L., Shastri,
Superintendent Research, Museum and
Archaeological Department,
His Highness'. Govt.
J & K. Srinagar.

Published uuder the authority of the Government of
His Highness Rajarajeshwara Maharajadhiraja
Sri Maharaja Harisinghji Bahadur
G.C.S.I.,G C.I.E.,K.C.V.O;LL.D.
Maharaja of Jammu & Kashmir-

*Printed at*
*The Krishna Printing Press.*
*Kothi Bagh Srinagar,*
*Kashmir.*

1947 A.D.



कश्मीरसंस्कृतग्रन्थावलिः

ग्रन्थाङ्कः ७३.

श्रीसोमशम्भुविरचिता ।

# कर्मकाण्डक्रमावली ।

श्रीराजराजेश्वर – महाराजाधिराज – कश्मीरनरेश

श्रीहरिसिंहजी – बहादुराज्ञया

रिसर्चकार्यालयाध्यक्ष – पण्डित जगद्धरजाडू शास्त्रिणा

कार्यालयस्थेतरसंपादकपण्डितसहायेन

संशोधनादिसंस्करणोत्तरं

संपाद्य

श्रीनगरे 'कृष्णा प्रेस' नाम्नि मुद्रणालये मुद्रापयित्वा

प्रकाश्यमुपनीता ।

संवत् २००४ सन्न ईस्वी १९४७

श्रीनगर – कश्मीर

## KARMAKANDAKRAMAVALI



### FOREWORD

The present edition of the Karmakanda-kramavali by Somashambhu printed as No. LXXIII of the Kashmir Series of the Texts and Studies is based on the following Manuscript-material:-

(क) Belonging to the Research Department. Script: Sharada. Consists of 61 leaves with 16 lines per page, each line having 40 syllables. Size 8″ × 5½″. Date Ashada 1920 Anno Vikrami. correct.

(ख) This manuscript belongs to Pt. Shyam Lal Jatu of Srinagar. It was procured on hire from the said Pandit for collation. It contains 100 leaves with 10 lines per page. Syllables on a line 30. Script: Sharada. Size 8″ × 10″. correct.

(ग) Belongs to Dr. Shivnath Shastri, Acharya, D.O.C., etc. of this Department. Script Sharda. Size: Talapatra. Leaves 329. Lines per page 30. Syllables on a line 29. Date Saptarshi 4823.

The Karmakandakramavali is a small compendium based on the Shaiva ritualistic lite-

rature. The author has drawn extensively upon the ancient works such as Lilavati, Maheshottara, Svacchanda, Parameshvara and other Shastras of this type. In conception this work is throughout Shaivite and lays down rules and regulations pertaining to the daily practices of an orthodox Hiudu, who is a rigid follower of the Tantric system.'

Principal subjects that find treatment in the body of the book are enumerated below:-

SNANA. The elaborate procedure to be adopted in five kinds of Snanas, namely-Mala, Vidhi Varuna, Agneya, Mahendra, Pavana, Mantra and Manasa is described in detail. Out of these the Mala consists in employing earth, like soap, to remove all dirt that may have accumulated on the body. it is a kind of preparatory bath taken before the principal one i. e. Vidhi Snana (obligatory bath). The Varuna is the bath with water (as Varuna is the lord of water) which is to be taken if one touches a pigeon, fowl, murderer, crow, heron, ass, horse, cat, pig vulture, camel, cremation ground. an out-cast, a corpse, and a women who has recently delivered. The Agneya, which consists in smearing the body with ashes, is ordained

to be taken when one comes in contact with dirty women, eunuchs, Shudras, cats and mice. The Mahendra consists in wetting one's body with rain accompanied with sunshine; Pavana, in taking on the body the dust raised by the hoofs of cows; Mantra in sprinkling water with the mantra सद्योजात etc., and Manasa, in reflecting on God Shiva, prior to taking breathing exercises (प्राणायाम).

TARPANA, a subsidiary constituent part of Snana consists according to the present work, in offering water to the mantra-deities, gods, sages, seven superhuman persons Sanaka etc, spirits, Manes, Quarters, Guardians of the Quarters, Siddhas, Mothers, Planets, Rakshasas and Acharyas.

BHOJANA. One should sit down to eat food in one line with those who belong to his own caste. The vessels or plates in which the food is to be taken should be made of gold, silver, copper and iron respectively for Acharya, Sadaka, Putra and Samayin In absence of metalware, leaves of Palasha, lotus etc. may be used, but those of Vata, Ashwatha etc, are to be avoided. It further prescribes some injunctions about the quantity

of food to be eaten and the method of taking water.

Similarly such topics as Bhakshyabhakshya (what food should one partake or what not), Antyeshti (funeral rites), Shraddha (rites performed for the deceased ancestors), Prayashchitta (expiation), Pratishtha ( dedication of works of public utility and of temples and shrines) and Diksha ( consecration ) are described in greater or less detail.

It is usual with the mediaeval authors from Kashmir to give dates in Saptarshi, Kali or Shaka eras, but the present work records its date in the Vikrami Samvat. We can, therefore, safely presume that our author does not belong to Kashmir. He flousihed in the latter half of the IIth century A. D. as is clearly borne out by the following colophon:-

श्रीविक्रमार्कनृपकालसमुद्भवेषु
शून्याग्निभिः समधिकेषु च तच्छतेषु ।
एकादशस्त्वमलशास्त्रमिदं (११३०) समस्तं
ग्रन्थस्य देशिकमतस्य सहस्रयुग्मम् ॥
ईशाननामा शिवतुल्यधामा
तस्यापि शिष्यो विमलेशनामा ।

तस्यापि शिष्यः स शिवाभिधान-
स्तस्यापि शिष्यः खलु सोमशम्भुः ॥

The colophon mentioned above besides giving the date (Anno Vikrami 1130 corresponding to A. D. 1073) of the completion of the composition of the present text enumerates the line of teachers of the initiates. First among them comes Iseana. His disciple is said to be Vimalesha. Shiva is the third in the line of teachers i. e. the disciple of Vimalesha and the teacher of Soma Shambhu, our author.

J. D. Zadoo

## विषयानुक्रमणिका

अथ

# कर्मकाण्डक्रमावली

———o———

श्रीसोमशम्भुविरचिता

———o———

विश्वबोधविधातारं विश्वविज्ञानविग्रहम् ।
विश्वरूपं परं नत्वा विश्वेशं शिवमव्ययम् ॥१॥
संवीक्ष्य शिवशास्त्राणि सदाचार्योपदेशतः ।
क्रमान्नित्यादिकं वक्ष्ये क्रमबोधविवृद्धये ॥२॥
प्रातरुत्थाय सञ्चिन्त्य शिवाय शिवमक्षरम् ।
उत्सृजेन्मलमूत्रादि गत्वा देशं यथोचितम् ॥३॥
अथवा मुखसंशुद्धिं दन्तानां धावनं विना ।
गण्डूषैर्मन्त्रसंपूतैर्विधाय स्नानमारभेत् ॥४॥
सिन्धुसागरकासारतडागेषु महाह्रदे ।
पल्वले प्लवने चैव स्नानमत्यर्थमुत्तमम्[1] ॥५॥
नालके पुष्करिण्यादौ मध्यमं, कन्यसं पुनः ।
वापीकुण्डोदपानेषु गृहे स्नानमनुत्तमम् ॥६॥
खात्वासिना समुद्धृत्य मृदमष्टाङ्गुलं ततः ।
सर्वात्मना समादाय पुनस्तेनैव पूरयेत् ॥७॥
मनसा तां नदीं प्राप्य निधायास्त्रेण शोधयेत् ।
तृणादि शिखयोद्धृत्य वर्मणा विभजेत् त्रिधा ॥८॥

---

[1] 'त्तमम्' ख० पाठः ।

एकया नाभिपादान्तं प्रक्षाल्य पुनरन्यया
अस्त्रेणालब्धयालभ्य दीप्तया सर्वविग्रहम् ॥९॥
निरुध्याक्षाणि पाणिभ्यां प्राणं संयम्य वारिणि ।
निमज्ज्यासीत हृदस्त्रं स्मरन् कालानलप्रभम् ॥१०॥
मलस्नानं विधायेत्थं समुत्थाय जलान्तरात् ।
अथ सन्ध्यामुपास्याथ विधिस्नानं समाचरेत् ॥११॥
सरस्वत्यादितीर्थानामेकमङ्कुशमुद्रया ।
हृदाकृष्य तथास्थाप्य पुनः संहारमुद्रया ॥१२॥
शेषं मृद्भागमादाय प्रविश्यानाभि वारिणि ।
वामपाणितले कुर्याद् भागत्रयमुदङ्मुखः ॥१३॥
अङ्गैर्दक्षिणतश्चैव पूर्वमस्त्रेण सप्तधा ।
शिवेन दशधा सौम्यं जपेद्भागत्रयं क्रमात् ॥१४॥
सर्वदिक्षु क्षिपेत्पूर्वं हुंफडन्तशिवाणुना ।
कुर्याच्छिवेन सौम्येन शिवतीर्थं भुजभ्रमात्[1] ॥१५॥
सर्वाङ्गमङ्गजप्तेन मूर्धादिचरणावधि ।
दक्षिणेन समालभ्य पठन्नङ्गचतुष्टयम् ॥१६॥
विधाय खानि सर्वाणि संमुखीकरणेन च ।
निमज्ज्यान्तर्जले तिष्ठेच्छिवतीर्थे शिवं स्मरेत् ॥१७॥
चन्द्रार्ककरयुग्मेन कृतया कुम्भमुद्रया ।
वौषडन्तषडङ्गेन के कुर्यादभिषेचनम् ॥१८॥
स्वरक्षार्थमविच्छिन्नविघ्नविध्वंसनाय च ।
अस्त्राभिमन्त्रितं तोयं दिग्विदिक्षु परिक्षिपेत् ॥१९॥

[1] 'क्रमात्' ख० ।

चक्रवर्त्युपचारेण सुगन्धामलकादिभिः ।
स्नात्वावतार्य तत्तीर्थं संहारिण्याथ संहरेत् ॥२०॥
कपोतकुक्कुटातायिकाककङ्कखरश्वभिः ।
ग्रामसूकरगृध्रोष्ट्रैस्तदुद्भूताङ्गवैकृतैः ॥२१॥
श्मशानपतितप्रेतसूतिकामाल्यभोजनैः ।
तथान्यलिङ्गिभिः स्पर्शे वारुणं स्नानमाचरेत् ॥२२॥
शुक्रविण्मूत्रसंपर्के नाभेरूर्ध्वं करौ विना ।
वपने वमने तोयमवगाहेत शुद्धये ॥२३॥
अथातो विधिसिद्धेन संहितामन्त्रितेन च
निवृत्त्यादिविशुद्धेन भस्मना स्नानमाचरेत् ॥२४॥
शिरस्तः पादपर्यन्तं हुंफडन्तशराणुना ।
तेन कृत्वा मलस्नानं विधिस्नानं समाचरेत् ॥२५॥
ईशतत्पुरुषाघोरगुह्यकाजातशम्बरैः[1] ।
क्रमेणोद्धूलयेन्मूर्धवक्त्रहृद्गुह्यविग्रहान् ॥२६॥
सन्ध्यात्रये निशीथे च चर्यापूर्वावसानयोः ।
सुप्त्वा भुक्त्वा पयः पीत्वा कृत्वा चावश्यकादिकम् ।२७।
स्त्रियं नपुंसकं शूद्रं बिडालशकमूषकम् ।
स्पृष्ट्वा तथाविधांश्चान्यानाग्नेयं स्नानमाचरेत् ॥२८॥
देवाग्निगुरुभक्तानां समीपेऽन्त्यजदर्शने ।
अशुद्धभूतले मार्गे कुर्यान्नोद्धूलनं व्रती ॥२९॥
सूर्यांशुवर्षसंपर्के प्राङ्मुखेनोर्ध्वबाहुना ।
माहेन्द्रं स्नानमीशेन कार्यं सप्तपदावधि ॥३०॥

[1] मन्त्रैरित्यर्थः ।

गोसंघमध्यगः कुर्यात् तत्खुरोत्खातरेणुभिः ।
पावनं नरमन्त्रेण संस्पृशेद्वर्मणाथवा ॥३१॥
सद्योजातादिभिर्मन्त्रैरम्भोभिरभिषेचनम् ।
मान्त्रं स्नानं भवेदेवं वरुणाग्न्योर्द्वयोरपि ॥३२॥
स्नानं स्वमूलमन्त्रेण[1] प्राणायामपुरःसरम् ।
कुर्वीत मानसं स्नानं सर्वत्र विहितं चरेत् ॥३३॥
संप्रक्षाल्य विशुद्धेन हस्तौ पादौ च वारिणा ।
संवीक्ष्य त्रिः पिबेदम्बु ब्रह्मतीर्थेन शम्बरैः ॥३४॥
रत्नहेमस्थलिङ्गेषु चले चित्रे प्रदक्षिणे ।
गुरुष्वपि न निर्माल्यं व्याख्यासु प्रतिमासु च ॥३५॥
पूजायामन्नधूपाद्यैर्गन्धदीपप्रभासु च ।
नदीप्रवाहे निर्माल्यं न दुष्यति कदाचन ॥३६॥
सद्यःप्रतिष्ठिते लिङ्गे चले वा यदि वाचले ।
चतुर्थीकर्मपर्यन्तं निर्माल्यं च न दुष्यति ॥३७॥
पत्रं पुष्पं फलं तोयमन्नपानाद्यमौषधम् ।
अनिवेद्य न भुञ्जीत यदाहाराय कल्पितम् ॥३८॥
अनिवेदितभुञ्जानः प्रायश्चित्ती भवेन्नरः ।
शिवाष्टशतजाप्येन पूजया च विशुध्यति ॥३९॥
दैवतानां प्रतिष्ठासु तडाकारामपर्वसु ।
तत्र पञ्चशतीं जप्त्वा पञ्चमस्य विशुध्यति ॥४०॥
पुंसवने चतुर्थ्यां तु भुक्त्वा वामशतं जपेत् ।
द्वादशैकादशाहेषु दक्षिणस्य शतत्रयम् ॥४१॥

---

[1] 'समूल' क० ।

गणान्नं गणकस्यान्नं सत्रस्यान्नं तथैव च ।
भुक्त्वान्नं भोजकानां च व्रतं चान्द्रायणं चरेत् ॥४२॥
पाकादियज्ञगोदाने चौलोद्वाहव्रतेषु च ।
तथा साचारवर्णानां भुञ्जानोऽन्नं न दुष्यति ॥४३॥
योऽन्नं नामन्त्रितो भुङ्क्ते यस्य वर्णस्य दीक्षितः ।
तज्जातीशस्वजातीशौ जप्त्वैकत्र स शुध्यति ॥४४॥
एको द्वौ वा त्रयश्चैव दिवसास्तस्य शुद्धये ।
क्षत्रविट्शूद्रजातीनां जपस्यानुक्रमेण तु ॥४५॥
स्नानं पूजां जपं होममजीर्णे परिवर्जयेत् ।
जीर्णे स्नात्वा शतं साष्ट गायत्र्याः परिवर्तयेत् ॥४६॥
दीक्षितेन सवर्णेन समुच्छिष्टेन दीक्षितः ।
उच्छिष्टस्पृष्ट आचम्य स्वजातीशशतं जपेत् ॥४७॥
तस्मिन्नदीक्षितैः स्पृष्टे स्नात्वाचम्य शतद्वयम् ।
सामीप्याद्दीक्षिते तद्वदुपवासोऽप्यदीक्षिते ॥४८॥
वैश्यशूद्रौ द्विजः स्पृष्ट्वा समुपोष्य द्व्यहं त्र्यहम् ।
तज्जातीशस्वजातीशावेकीकृत्य जपेत्क्रमात् ॥४९॥
क्षत्रियः शूद्रसंपर्कात् तौ जपेद्द्विरुपोषितः ।
एतानदीक्षितान्स्पृष्ट्वा पूर्वोक्तद्विगुणं चरेत् ॥५०॥
पादहीनं क्षत्रियस्तु वैश्योऽर्धेन विवर्जितम् ।
पादत्रयोज्झितं शूद्रो द्विजस्पर्शात्तदेव हि ॥५१॥
शूद्रस्तु क्षत्रियस्पर्शे क्षत्रोक्तार्धेन शुध्यति ।
अन्यत्राप्येवमालोच्य प्रायश्चित्तं वदेद्बुधः ॥५२॥

स्वजातीशायुतं जप्त्वा दिनत्रयमुपोषितः ।
अन्त्यजेन सह स्पर्शे विशुद्धो जायते नरः ॥५३॥
जाते चण्डालसंपर्के दक्षिणस्यायुतत्रयम् ।
जप्त्वा कृच्छ्रमनुष्ठाय प्रम्लाति सकलं मलम् ॥५४॥
पुरुषाघोरवामाजा जातीशा ब्राह्मणादिषु ।
साधारणोऽप्यपरस्तु ईशः साधारणः परः ॥५५॥
उपवासं प्रकुर्वीत स्वजात्युच्छिष्टभोजने ।
सामीप्योच्छिष्टभोक्ता वा जपेदपि सहस्रकम् ॥५६॥
भुक्त्वा वैश्यस्य शूद्रस्य समुच्छिष्टं द्व्यहं त्र्यहम् ।
क्रमेणोपवसेद्विप्रस्तथाऽघोरायुतं जपेत् ॥५७॥
द्विधाऽपि सूतके भुक्त्वा समुपोष्य विशुध्यति ।
वामस्य तु सहस्रेण कामात्तद्द्विगुणं चरेत् ॥५८॥
भुक्त्वा तत्र स्वकीये तु सहस्रं दक्षिणं जपेत् ।
उपवाससमोपेतं कामात्तद्द्विगुणं चरेत् ॥५९॥
कारुदासीनरेन्द्राणां सूतकं नैव विद्यते ।
निर्वाणादीक्षितानां तु पृथग्भागभुजां न तत् ॥६०॥
मत्स्यकण्टकशम्बूक[1]ान्भुक्त्वा नखकमर्दकान् ।
पीत्वा नवाम्बु चोपोष्य पञ्चगव्येन शुध्यति ॥६१॥
पीतशेषं तु यत्तोयं प्रमादाद्यदि तत्पिबेत् ।
उपोष्य रजनीमेकां पञ्चगव्यं पिबेदपि ॥६२॥
पीयमानपतत्तोयजुष्टमन्नमदन्नरः ।
सहस्रं रूपिणो जप्त्वा पञ्चगव्येन शुध्यति ॥६३॥

---

[1] शम्बूकः सामुद्रः प्राणिविशेषः ।

भुञ्जन्गुदेन्द्रियस्रावे शौचे स्नाने अपि द्विधा ।
आचाममाचरन्घोरसहस्रं च जपेदभुक् ॥६४॥
अनाचान्तः पिबेत्तोयं भक्षयेदथ मूत्रयेत् ।
जप्त्वाऽघोरं निराहारः पञ्चगव्येन शुध्यति ॥६५॥
विना यज्ञोपवीतेन पिबेद्भुञ्जीत वा यदि ।
जप्त्वाऽघोरं निराहारः पञ्चगव्यं पिबेत्तदा ॥६६॥
स्वधान्तैरात्मतत्त्वाद्यैर्द्भिः प्रमृज्याधरौ हृदा ।
दक्षिणाङ्गुष्ठमूलेन मध्याभिस्तिसृभिः स्पृशेत् ॥६७॥
अङ्गुष्ठतर्जनीमूर्ध्ना स्पृशेन्नासापुटद्वयम् ।
अङ्गुष्ठानामिकाग्रेण चक्षुः श्रोत्रं मुहुर्जलैः ॥६८॥
कनिष्ठाङ्गुष्ठयुग्मेन नाभिं वक्षस्तलेन तु ।
अङ्गुलीभिः समस्ताभिः शिरोंऽसौ च हृदा स्पृशेत् ॥६९॥
सकलीकरणं कृत्वा प्राणायामेन संस्थितः ।
त्रिः समावर्तयेन्मन्त्री मनसा शिवसंहिताम् ॥७०॥
पूर्ववत्पुनराचम्य पिधाय श्रोत्रवाङ्मनः ।
कृत्वा कराङ्गविन्यासमेकचित्तो व्यवस्थितः ॥७१॥
ब्रह्माणीं वैष्णवीं रौद्रीं रक्तां शुक्लां सितेतराम् ।
प्रातर्मध्याह्नसायाह्नसन्ध्या ध्यायेदनुक्रमात् ॥७२॥
रक्तभूषाम्बरां रक्तां जटा[1]यज्ञोपवीतिनीम् ।
हंसपद्मासनां बालां चतुर्वक्त्रां चतुर्भुजाम् ॥७३॥
स्रगक्षमालिनीं दक्षे वामे दण्डकमण्डलुम् ।
ब्राह्मीमष्टदृशं ध्यायेत्प्रातस्तारकितेऽम्बरे ॥७४॥

[1] 'सटायज्ञो' क० ।

शुक्लाम्बरधरां शुक्लां वनमालोपवीतिनीम् ।
तार्क्ष्यपद्मासनासीनामुद्भिन्नवयौवनाम् ॥७५॥
शंखचक्रधरां वामे दक्षिणे सगदाभयाम् ।
ध्यायेन्मध्यन्दिने देवीं वैष्णवीं सर्वभूषणाम् ॥७६॥
नीलोत्पलदलाभासां किञ्चिच्चलितयौवनाम् ।
चतुर्भुजां त्रिनेत्रां च जटाखण्डेन्दुमण्डिताम् ॥७७॥
त्रिशूलाक्षधरां दक्षे वामे साभयशक्तिकाम् ।
रौद्रीं ध्यायेद्वृषाब्जस्थां काले वास्तमितेऽरुणे ॥७८॥
कृष्णाजिनधराः सर्वाः साक्षिण्यः सर्वकर्मणाम् ।
तत्प्रभामण्डलाभोगप्रविष्टां[1] स्वतनुं स्मरेत् ॥७९॥
ज्ञानिनां परमाः सन्ध्याश्चतस्रोऽभिदधेऽधुना ।
एकैवानेकतां याति शिवशक्तिरुपाधितः ॥८०॥
मृणालतन्तुवत्तन्वीं रक्तां शुक्लां सितेतराम् ।
तुर्यां त्वरूपां कृष्णां वा या निशीथे विभाव्यते ॥८१॥
हृद्बिन्दुब्रह्मरन्ध्रेषु परे चैताः स्थिताः क्रमात् ।
तिस्रः सत्त्वादिसंयुक्ताश्चतुर्थी गुणवर्जिता ॥८२॥
सूर्याचन्द्रमसोरन्ते द्वे सन्ध्ये प्राणयोगिनाम् ।
शिवबोधः परो यस्तु सा सन्ध्या परमोच्यते ॥८३॥
पैत्र्यं मूले प्रदेशिन्याः कनिष्ठायाः प्रजापतेः ।
ब्राह्ममङ्गुष्ठमूलस्थं तीर्थं दैवं कराग्रतः ॥८४॥
सव्यपाणितले वह्नेस्तीर्थं सौम्यं तु वामतः ।
ऋषीणां तु समग्रेषु अङ्गुलीपर्वसन्धिषु ॥८५॥

---

[1] 'निविष्टां' ख० ।

ततः शिवात्मकैर्मन्त्रैः कृत्वा तीर्थं शिवात्मकम्।
मार्जनं संहितामन्त्रैस्तत्तोयेन समाचरेत् ॥८६॥
वामपाणिपतत्तोययोजनं सव्यपाणिना।
उत्तमाङ्गे क्रमान्मन्त्रैर्मार्जनं समुदाहृतम् ॥८७॥
नीत्वा तदुपनासाग्रं दक्षपाणिपुटे स्थितम्।
बोधरूपं सितं तोयं वामेनाहृत्य कुम्भयेत् ॥८८॥
तत्पापं कज्जलाभासं पिङ्गयारेच्य मुष्टिना।
क्षिपेद्वज्रशिलायद्यत् तद्भवेदघमर्षणम् ॥८९॥
स्वाहान्तशिवमन्त्रेण कुशपुष्पाक्षतान्वितम्।
शिवायार्घ्याञ्जलिं दत्त्वा गायत्रीं शक्तितो जपेत् ॥९०॥

ॐ तन्महेशाय विद्महे वाग्विशुद्धाय धीमहि तन्नः शिवः प्रचोदयात्। ॐ हूं शिवाय स्वाहा। ॐ हां हृदयाय स्वाहा, ॐ हीं शिरसे स्वाहा, ॐ हूं शिखायै स्वाहा, ॐ हैं कवचाय स्वाहा, ॐ हौं नेत्रेभ्यः स्वाहा, ॐ हः अस्त्राय स्वाहा; इति मन्त्रान्देवतीर्थेन तर्पयेत्। ॐ हां आदित्येभ्यः स्वाहा, ॐ हां वसुभ्यः स्वाहा, ॐ हां रुद्रेभ्यः स्वाहा, ओ हां शिवेभ्यः स्वाहा, ॐ हां साध्येभ्यः स्वाहा, ॐ हां मरुद्भ्यः स्वाहा, ॐ हां भृगुभ्यः स्वाहा, ॐ हां अङ्गिरसेभ्यः स्वाहा; इत्यष्टौ देवगणान् देवतीर्थेन तर्पयेत्। ततः कण्ठोपवीती ॐ हां अत्रये नमः, ॐ हां वसिष्ठाय नमः, ॐ हां पुलस्तये नमः, ॐ हां क्रतवे नमः, ॐ हां भरद्वाजाय नमः, ॐ हां विश्वामित्राय नमः, ॐ हां प्रचेतसे नमः, ॐ हां मरीचये नमः; इति आर्षतीर्थेन ऋषींस्तर्पयेत्।

उँ ह्रां सनकाय वौषट्, उँ ह्रां सनन्दनाय वौषट्, उँ ह्रां सनातनाय वौषट्, उँ ह्रां सनत्कुमाराय वौषट्, उँ ह्रां कपिलाय वौषट्, उँ ह्रां पञ्चशिखाय वौषट्, उँ ह्रां ऋभवे वौषट्; इति मानवतीर्थेन सप्त मनुष्यान्; उँ सर्वेभ्यो भूतेभ्यो वौषट्; इति संलग्नकरकमलमूलेन भूतानि तर्पयेत् । अथ दक्षस्कन्धोपवीती कुशमूलाग्रेण सतिलवारिणा उँ ह्रां कव्यवाहनाय स्वधा, उँ ह्रां अनलाय स्वधा, उँ ह्रां सोमाय स्वधा, उँ ह्रां यमाय स्वधा, उँ ह्रां अर्यम्णे स्वधा, उँ ह्रां अग्निष्वात्तेभ्यः स्वधा, उँ ह्रां बर्हिषद्भ्यः स्वधा, उँ ह्रां आज्यपेभ्यः स्वधा, उँ ह्रां सोमपेभ्यः स्वधा; इति देवपितॄन्; उँ ह्रां पितृभ्यः स्वधा, उँ ह्रां पितामहेभ्यः स्वधा, उँ ह्रां प्रपितामहेभ्यः स्वधा; एवं उँ ह्रां मातृभ्यः स्वधा, उँ ह्रां मातामहेभ्यः स्वधा, उँ ह्रां वृद्धमातामहेभ्यः स्वधा, उँ ह्रां सर्वेभ्यः स्वधा; इति प्रेतपितॄन् तर्पयेत् । उँ ह्रां सर्वेभ्यो ज्ञानिभ्यः स्वाहा, उँ ह्रां सर्वेभ्य आचार्येभ्यः स्वाहा

दिशां दिक्पतिसिद्धानां मातॄणां ग्रहरक्षसाम् ।
यथाविधि विधातव्यं तर्पणं विधिपूर्वकम् ॥६१॥

इति ज्ञात्वा आचार्यानपि तर्पयेत् । इति तर्पणविधिः ॥

प्रातः पूर्वमुखो भूत्वा मध्याह्ने दक्षिणामुखः ।
पश्चिमाभिमुखः सायमर्घो देय इति स्थितिः ॥६२॥
स्नाने देवार्चने होमेऽध्ययने पितृतर्पणे ।
अशून्यं तु करं कुर्यात्सुवर्णरजतैः कुशैः ॥६३॥
समाचम्य विधानेन त्र्यञ्जलेनार्घमुद्धरेत् ।

रक्तपुष्पादितोयेन मूलमन्त्रेण भानवे ॥६४॥
यदा यदा समाचामेन्मन्त्रन्यासं तदा तदा ।
कुर्वीत करकायेषु मन्त्री मन्त्रार्थसिद्धये ॥६५॥
अथ मार्तण्डदेवस्य साङ्गमर्चनमुच्यते ।
कृत्वा कराङ्गविन्यासं तन्मन्त्रैर्हृदयादिभिः ॥६६॥
आत्मानं रविरूपेण संचिन्त्यार्घस्य भाजनम् ।
पूरयेद्रक्तवर्णेन ललाटाकृष्टबिन्दुना ॥६७॥
तत्संपूज्य रवेरङ्गैः कृत्वा रक्षावगुण्ठनम् ।
संप्रोक्ष्य त्र्यस्रलैर्द्रव्यं पूर्वास्यो भानुमर्चयेत् ॥६८॥

ओं अं दण्डिने नमः, ओं अं पिङ्गलाय नमः; इति दक्षिणवामयोर्द्वारिपालद्वयम्; ओं गं गणपतये नमः ऐशान्याम्, ओं गुं गुरुभ्यो नमः आग्नेय्याम्, ओं अं प्रभूतासनाय नमः इति पीठमध्ये;

आग्नेयादीशपर्यन्तं कोणेषु च यथाक्रमम् ।

ओं अं विमलाय नमः, ओं अं साराय नमः, ओं अं आराध्याय नमः, ओं अं परमसुखाय नमः; इति सितरक्तपीतहरितसिंहरूपाणि विदिक्षु अर्चयेत् । तदुपरि ओं अं पद्मासनाय नमः; इति सितपद्ममध्ये । तदुपरि ओं रां दीप्तायै नमः, ओं रीं सूक्ष्मायै नमः, ओं रूं जयायै नमः, ओं रैं भद्रायै नमः, ओं रौं विभूतये नमः, ओं रां विमलायै नमः, ओं रां अमोघायै नमः, ओं रां विद्युतायै नमः, ओं रां सर्वतोमुख्यै नमः

पूर्वादीशानपत्रान्ता[1] अष्टौ शक्तीः प्रपूजयेत् ॥६९॥

[1] 'पर्यन्ताः' क पाठः ।

नवमीं कर्णिकामध्ये विस्फुरामासु योजयेत्

ॐ रां विस्फुरायै नमः; ॐ अर्कासनाय नमः। इति अर्कासनं सम्पूज्य

ॐ धवलाम्भोरुहारूढं दाडिमीकुसुमप्रभम् ।
स्फुरद्रत्नमहातेजोवृत्तमण्डलमध्यगम् ॥१००॥
अंसासक्तस्फुटश्वेतसनालाब्जकरद्वयम् ।
एकास्यं चिन्तयेद्भानुं द्विभुजं रक्तवाससम् ॥१०१॥

ॐ ह्रां खशोल्काय सूर्यमूर्तये नमः; इत्यनेन आसनोपरि मूर्तिं विन्यस्य ललाटाकृष्टस्फुरदरुणबिम्बमञ्जलौ विचिन्त्य, ॐ ह्रां ह्रीं सः सूर्याय नमः; इत्यनेन मूलमन्त्रेण तद्व्यापकमारोपयेत् ।

आवाहनादिमुद्राभिर्विधायावाहनादिकम् ।
प्रीतये ग्रहराजस्य बिम्बमुद्रां प्रदर्शयेत् ॥१०२॥
सकलीकरणं कृत्वा कार्यं तच्च खशोल्किना ।
पाद्यमाचमनीयं च शिरोर्घं गात्रपूजनम् ॥१०३॥
संपूज्य गन्धपुष्पाद्यैर्मूलमन्त्रेण भास्करम् ।
पद्माख्यां[1] बिम्बमुद्रां च भक्त्या तस्मै प्रदर्शयेत् ॥१०४॥
सौम्यानि रक्तवर्णानि वरदाब्जकराणि च ।
भूषिताणि द्विहस्तानि भानोरङ्गानि भावयेत् ॥१०५॥
दंष्ट्राकरालमत्युग्रं प्रज्वलत्पावकप्रभम् ।
तर्जयद्विघ्नसंघातमित्थमस्त्रं विचिन्तयेत् ॥१०६॥

ॐ अं हृदयाय नमः अग्निदले, ॐ अर्काय शिरसे नमः

---

[1] तयोर्लक्षणं:- पद्माकारौ करौ कृत्वा प्रतिश्लिष्टे तु मध्यमे ।
अङ्गुल्यौ धारयेत्तस्मिन् बिम्ब मुद्रेति सोच्यते ॥
हस्तौ तु संमुखौ कृत्वा संनतप्रोन्नताङ्गुली ।
तलान्तर्मिलिताङ्गुष्ठौ मुद्रैषा पद्मसंज्ञिता ॥

इत्यैशानदले, ओं भूर्भुवःस्वर्ज्वालिन्यै शिखायै नमो नैरृ-
तदले, ओं हूँ कवचाय नमो वायव्यदले, ओं भां नेत्रेभ्यो नमः;
इति मध्ये, ओं रः अस्त्राय फडिति पूर्वाद्युत्तरान्तं चतुर्दिग्दलेषु

धेनुमुद्रा हृदादीनां गोविषाणा च नेत्रयोः।
अस्त्रस्य त्रासनीयं च ग्रहाणां च नमस्क्रिया ॥१०७॥

ओं सों सोमाय नमः इति पूर्वदलाग्रे, ओं अं अङ्गारकाय नमः इति दक्षिणदलाग्रे, ओं बुं बुधाय नमः इति पश्चिमदलाग्रे, ओं बृं बृहस्पतये नमः इति उत्तरदलाग्रे, ओं भां भार्गवाय नमः इति आग्नेयदलाग्रे, ओं शं शनैश्चराय नमः इति नैरृतदलाग्रे, ओं रां राहवे नमः इति वायव्यदलाग्रे, ओं कें केतवे नमः इति ईशानदलाग्रे

सोमं कुमुदकुन्दाभं बुधं चामीकरप्रभम्।
गुरुं गोरोचनाभासं शुक्रं गोक्षीरसन्निभम् ॥१०८॥
रक्तमङ्गारकं ध्यायेद्राजवर्तनिभं शनिम्।
कृष्णं कृताञ्जलिं राहुं केतुं धूमाहिसन्निभम् ॥१०९॥
कामरूपधराः सर्वे दिव्याम्बरविभूषणाः।
वामोरुन्यस्तहस्ताश्च दक्षहस्ताभयप्रदाः ॥११०॥
ध्यानपूर्वं ग्रहान्नेवं पूजयित्वा यथाक्रमम्।
धूपदीपादिनैवेद्यं देयं सर्वं खशोल्किना ॥१११॥
मूलमन्त्रजपं कृत्वा यथाशक्ति समाहितः।
अर्घ्यपात्राम्बुना भक्त्या भास्कराय निवेदयेत् ॥११२॥
स्तुत्वा प्रणम्य संपूज्य निवेद्यार्घ्यं पराङ्मुखः।

अभिधाय क्षमस्वेति फडन्तेन शराणुना ॥११३॥
समाहृत्याणुसंघातं संहारिण्याथ संहृतम् ।
हृत्पुण्डरीकमध्यस्थे[1] शिवसूर्ये निवेशयेत् ॥११४॥
ततः ॐ अः तेजश्चण्डाय नमः
अनेनादित्यनिर्माल्यं चण्डाय विनिवेदयेत् ।
ईशकायप्रतिष्ठाय रवेरित्यर्चने विधिः ॥ ॥११५॥
इति आदित्यपूजनविधिः ॥
अथाचम्य विधानेन प्रणवार्घकराम्बुजः ।
द्वारमस्त्राम्बुना प्रोक्ष्य द्वारपालान्प्रपूजयेत् ॥११६॥

ॐ हां गणपतये नमः, ॐ हां सरस्वत्यै नमः, ॐ हां लक्ष्म्यै नमः इति ऊर्ध्वोडम्बरके; ॐ हां नन्दिने नमः, ॐ हां गङ्गायै नमः इति दक्षिणशाखायां; ॐ हां महाकालाय नमः, ॐ हां यमुनायै नमः इति वामशाखायाम्;

दिव्यदृष्टिनिपातेन दिव्यानुपरिवर्तिनः ।
ज्वलन्नाराचमुद्राणुं पुष्पं क्षिप्त्वान्तरिक्षगान् ॥११७॥
दक्षपार्ष्णेस्त्रिभिर्घातैर्भूमिस्थांस्त्रिविधानिति ।
विघ्नानुत्सारयेन्मन्त्री यागमन्दिरमध्यगः ॥११८॥
देहलीं लङ्घयेत्किञ्चिद्वामशाखां समाश्रयन् ।
प्रविश्य दक्षपादेन विन्यस्यास्त्रमुडम्बरे ॥११९॥
ॐ हां वास्त्वधिपतये ब्रह्मणे नमः इति ब्रह्मस्थाने पुष्पं दद्यात् ।
निरीक्षणादिभिः शस्त्रैः शुद्धानादाय गड्डुकान् ।
लब्धानुज्ञः शिवान्मौनी गङ्गादिकमनुस्मरेत् ॥१२०॥

---
[1]'स्थं' क० पाठः ।

पवित्राङ्गप्रजप्तेन वस्त्रपूतेन वारिणा ।
पूरयेदस्त्रधौतांस्तान्गायत्र्या हृदयेन वा ॥१२१॥
गड्डुकाद्यतपुष्पादि सर्वं द्रव्यसमुच्चयम् ।
सन्निधीकृत्य पूजार्थं भूतशुद्ध्यादिमाचरेत् ॥१२२॥
देवदक्षिणदिग्भागे सन्निविष्टः सुखासने ।
उत्तरास्यो विनीतात्मा न्यस्तमन्त्रकरद्वयः । ॥१२३॥
संहारमुद्रयादाय मूलमन्त्रेण विग्रहात् ।
भोग्यकर्मोपभोगार्थं विधानज्ञो हृदम्बुजे ॥१२४॥
पाणिकच्छपिकायां च द्वादशान्तपदेऽथवा ।
निधाय निजमात्मानं पञ्चभूतानि शोधयेत् ॥१२५॥
चरणाङ्गुष्ठयुग्माधः संचिन्त्य विमलद्युतिम् ।
सुशिरान्तर्बहिः शक्तिं व्यापिनीं चिन्तयेदधः ॥१२६॥
हुंकारे ब्रह्मरन्ध्रस्थे प्रज्वलत्पावकप्रभे ।
विधाय प्राणसंरोधं चित्तं मन्त्री निवेशयेत् ॥१२७॥
रेचकान्ते फडन्तेन तेन हृत्कण्ठतालुषु ।
भ्रूमध्ये ब्रह्मरन्ध्रे च भित्त्वा ग्रन्थिं निवर्त्य च ॥१२८॥
हंकारं मूर्ध्नि विन्यस्य जीवं हृदयसंपुटे ।
पूरकाहृतचैतन्यं हूं शिखोपरि विन्यसेत् ॥१२९॥
संशुद्धं बिन्दुभूतं तं ध्यात्वा कृत्वा च कुम्भकम् ।
रेचकेन शिवे विद्वानेकोद्घातेन योजयेत् ॥१३०॥
बीजवृत्त्या शिवे लीनं प्रतिलोमं स्वहेतुषु ।
तत्त्वानि बिन्दुपर्यन्तं लयं नीत्वा विशोधयेत् ॥१३१॥

पृथ्वीवातौ पयोवह्नी द्वौ द्वौ शोध्यौ परस्परम्।
आकाशं चाविरोधेन यथा शोध्यं तथा शृणु ॥१३२॥
पार्थिवं मण्डलं पीतं कठिनं वज्रलाञ्छितम्।
ह्लामित्यात्मकबीजेन तन्निवृत्तिकलात्मकम् ॥१३३॥
पादादारभ्य मूर्धान्तं विचिन्त्य चतुरश्रकम्।
उद्घातपञ्चकेनैव वायुभूतं विचिन्तयेत् ॥१३४॥
अर्धचन्द्रं द्रवं सौम्यं शुभ्रमम्भोजलाञ्छितम्।
ह्रीमित्यनेन बीजेन प्रतिष्ठारूपतां गतम् ॥१३५॥
संयुक्तं वाममन्त्रेण पुरुषोत्तमकारणम्।
आप्यं चतुर्भिरुद्घातैर्वह्निभूतं विशोधयेत् ॥१३६॥
आग्नेयं मण्डलं त्र्यश्रं रक्तं स्वस्तिकलाञ्छितम्।
हूमित्यनेन मन्त्रेण विद्यारूपं विभावयेत् ॥१३७॥
घोरेण त्रिभिरुद्घातैर्जलभूतं विशोधयेत्।
षडश्रं मण्डलं वायोर्बिन्दुभिः षड्भिरङ्कितम् ॥१३८॥
कृष्णं ह्वैमितिबीजेन जातं शान्तिकलामयम्।
संचिन्त्योद्घातयुग्मेन पृथ्वीतत्त्वं विशोधयेत् ॥१३९॥
नभो बिन्दुमयं वृत्तं बिन्दुशक्तिविभूषितम्।
व्योमाकारं सुवृत्तं च शुद्धस्फटिकनिर्मलम् ॥१४०॥
हुंकारेण फडन्तेन शान्त्यतीताकलामयम्।
ध्यात्वैकोद्घातयोगेन सुविशुद्धं विभावयेत् ॥१४१॥
आप्याययेत् ततः सर्वं मूलेनामृतवर्षिणा।
आधाराख्यमनन्तं च धर्मज्ञानादिपङ्कजम् ॥१४२॥

हृद्यासनमिदं दत्त्वा मूर्तिमावाहयेत्ततः ।
दृष्ट्वा शिवमयं तस्यामात्मानं द्वादशान्ततः ॥१४३॥
अथ तां शक्तिमन्त्रेण वौषडन्तेन सर्वतः ।
दिव्यामृतेन संप्लाव्य कुर्वीत सकलीकृतिम् ॥१४४॥
हृदयादिकरान्तेषु कनिष्ठाद्यङ्गुलीषु च ।
हृदादिमन्त्रविन्यासः सकलीकरणं मतम् ॥१४५॥
क्षिपेत्सर्वासु काष्ठासु तालत्रयपुरःसरम् ।
छोटिकाभिः शिवस्यास्त्रं रक्षार्थं विघ्ननाशनम् ॥१४६॥
प्राकारेण तनुत्रेण तद्बहिः परिखान्वितम् ।
शक्तिजालमतश्चोर्ध्वं ततश्च प्रवितानयेत् ॥१४७॥
दर्शयित्वा महामुद्रामापादतलमस्तकाम् ।
भावोपनीतपुष्पाद्यैर्हृदम्भोजे शिवं यजेत् ॥१४८॥
पूरकाकृष्टपीयूषहविषा च शिवाणुभिः ।
नाभिकुण्डे स्वतःसिद्धे तर्पयेत्तु शिवानलम् ॥१४९॥
निर्भर्त्सितशरच्चन्द्रबिन्दुरूपं महेश्वरम् ।
ललाटपट्टमध्यस्थं चिन्तयेच्छुभविग्रहम् ॥१५०॥
एकं स्वर्णादिपात्राणां पात्रमस्त्राम्बुशोधितम् ।
बिन्दुप्रस्रुतपीयूषगन्धतोयाक्षतादिना ॥१५१॥
हृदापूर्य षडङ्गेन पूजयित्वाभिमन्त्रयेत् ।
संरक्ष्य हेतिमन्त्रेण कवचेनावगुण्ठयेत् ॥१५२॥
रेचयित्वार्घ्यमष्टाङ्गं रेचयेद्धेनुमुद्रया ।
अभिषिञ्चेदथात्मानं मूर्ध्नि तत्तोयबिन्दुना ॥१५३॥

तत्रस्थं यागसम्भारं प्रोक्षयेदस्त्रवारिणा ।
अभिमन्त्र्य हृदा पिण्डैस्तनुत्रेण च वेष्टयेत् ॥१५४॥
दर्शयित्वाऽमृतां मुद्रां पुष्पं दत्त्वा निजासने ।
विधाय तिलकं मूर्ध्नि पुष्पं मूलेन योजयेत् ॥१५५॥
स्नाने देवार्चने होमे भोजने यागयोगयोः ।
आवश्यके जपे धीरः सदा वाचंयमो भवेत् ॥१५६॥
नादान्तोच्चारणान्मन्त्रं शोधयित्वा पुराकृताम् ।
पूजामभ्यर्च्य गायत्र्याः सामान्यार्घ्यमुपाहरेत् ॥१५७॥
ब्रह्मपञ्चकमावर्त्य माल्यमादाय लिङ्गतः ।
ऐशान्यां दिशि चण्डाय हृदयेन निवेशयेत् ॥१५८॥
प्रक्षाल्य पिण्डिकां लिङ्गमस्त्रतोयैस्ततो हृदा ।
अर्घ्यपात्राम्बुना सिञ्चेदिति लिङ्गविशोधनम् ॥१५९॥
इत्थमात्माश्रयद्रव्यमन्त्रलिङ्गविशुद्धिषु ।
कृतासु देवदेवस्य पूजनं नान्यथा भवेत् ॥१६०॥

तत्र पीठस्य वायव्यां दिशि ओं हां गणपतये नमः । ऐशाने ओं हां गुरुभ्यो नमः ।

ततः कूर्मशिलासीनां गोक्षीरसितविग्रहाम् ।
यजेद्बीजाङ्कुराकारां शक्तिमाधाररूपिणीम् ॥१६१॥

ओं हां आधारशक्तये नमः ।

कुन्देन्दुधवलोद्दण्डसरोजमुकुलाकृतिम् ।
यजेद्ब्रह्मशिलारूढं शिवस्यानन्तमासनम् ॥१६२॥

ओं हां अनन्तासनायनमः ।

विचित्रकेसरिप्रख्यानन्योन्यं पृष्ठदर्शिनः।
कृतत्रेतादिरूपेण शिवस्यासनपादुकान् ॥१६३॥
धर्मं ज्ञानं च वैराग्यमैश्वर्यं च यथाक्रमम्।
कर्पूरकुङ्कुमस्वर्णकज्जलाभानि पूजयेत् ॥१६४॥

उों हां धर्माय नम आग्नेये। उों हां ज्ञानाय नमो नैर्ऋते। उों हां वैराग्याय नमो वायव्ये। उों हां ऐश्वर्याय नम ऐशाने। उों हां अधश्छादनाय नमोऽधः। उों हां ऊर्ध्वच्छादनाय नम ऊर्ध्वे।

उत्फुल्लाष्टदलं श्वेतं तदेवानन्तपङ्कजम्।
संपूज्य सिंहवर्गोर्ध्वं पद्ममुद्रां प्रदर्शयेत् ॥१६५॥

उों हां पद्मासनाय नमः।

तप्तचामीकरच्छायां पञ्चाशद्बीजगर्भिताम्।
केसराणां चतुःषष्ट्या कर्णिकां पूजयेद्बुदा ॥१६६॥

उों हां कर्णिकायै नमः।

उद्यद्दिनकराभासास्त्रिनेत्राश्च चतुर्भुजाः।
जटामुकुटखण्डेन्दुमण्डिता धृतचामराः ॥१६७॥
वरदाभयहस्ताश्च शिवासक्तदृगम्बुजाः।
पूर्वादीशानपत्रस्थाः केसराग्रेष्वनुक्रमात् ॥१६८॥
शक्तीः संपूजयेदष्टौ नमोमुद्रां प्रदर्शयेत्।
गोक्षीरधवलां शक्तिं कर्णिकायां मनोन्मनीम् ॥१६९॥

उों हां वामायै नमः, उों हां ज्येष्ठायै नमः, उों हां रौद्र्यै नमः, उों हां काल्यै नमः, उों हां कलविकरण्यै नमः, उों

हां बलविकरण्यै नमः, ओं हां बलप्रमथिन्यै नमः, ओं हां सर्वभूतदमन्यै नमः, ओं हां मनोन्मन्यै नमः ।

क्षित्यादिशुद्धविद्यान्तं तत्त्वव्यापकमासनम् ।
संचिन्त्य देवदेवस्य पूजयेत्तदनन्तरम् ॥७०॥

ओं हां शिवासनाय नमः; इत्यासनमन्त्रः ।

तत्र सिंहासने देवं शुद्धस्फटिकनिर्मलम् ।
पञ्चास्यं दशदोर्दण्डं प्रतिवक्त्रं त्रिलोचनम् ॥७१॥
जटामुकुटशोभाढ्यं स्फुरच्चन्द्रार्धशेखरम् ।
शक्त्यभीशूलखट्वाङ्गवरव्यग्रकराम्बुजम् ॥७२॥
दक्षिणतोऽथ वामस्थं डमरुं बीजपूरकम् ।
नागाक्षसूत्रं लीलाब्जं बिभ्राणं पञ्चभिः करैः ॥७३॥
द्वात्रिंशल्लक्षणोपेतं बद्धपद्मासनस्थितम् ।
सादाशिवीं न्यसेन्मूर्तिं शैवीं शक्त्यन्तगोचराम् ॥७४॥

ओं हां ३ शिवमूर्तये नमः । पूजयेच्च अनेनैव

सर्वज्ञं सर्वकर्तारं बोधानन्दमयं विभुम् ।
निष्कलं स्वप्रकाशं च संचिन्त्य परमं शिवम् ॥७५॥
ब्रह्मादिकारणत्यागान्मन्त्रं नीत्वा शिवास्पदम् ।
ततो ललाटमध्यस्थस्फुरत्तारापतिप्रभम् ॥७६॥
षडङ्गेन समाकीर्णं बिन्दुरूपं परं शिवम् ।
पुष्पाञ्जलिगतं ध्यात्वा लक्ष्यमूर्तौ नियोजयेत् ॥७७॥

ओं हां हूँ शिवाय नमः ।

आवाहन्या हृदावाह्य स्थापन्यास्थाप्य शङ्करम् ।

संनिधानादिकं कृत्वा निष्ठुरायां निरोधयेत् ॥१७८॥
कालकल्या फडन्तेन विघ्नानुत्सार्य रिष्टिना ।
लिङ्गमुद्रां नमस्कारं हृदा बद्ध्वावगुण्ठयेत् ॥१७९॥
सादरं संमुखीभाव आवाहनमिहोच्यते ।
भक्त्या निवेशनं तत्र स्थापनं कथितं बुधैः ॥१८०॥
जगन्नाथ तवास्मीति यत्स्वीकारोपदर्शनम् ।
विभुत्वेऽपि तदीशस्य संनिधानं न चान्यथा ॥१८१॥
आ कर्मकाण्डपर्यन्तं संनिधेर्योऽपरिच्चयः ।
स शंभोर्व्यापकत्वेऽपि निरोधः परिगीयते ॥१८२॥
शिवस्यानन्दबीजस्य[1] बोधानन्दमयस्य च ।
अभक्तेष्वप्रकाशो यस्तद्धवेदवगुण्ठनम् ॥१८३॥
सकलीकरणं कृत्वा मन्त्रैः षड्भिरथैकताम् ।
अङ्गानामङ्गिना सार्धं विदध्यादमृतीकृतिम् ॥१८४॥
यथा दृश्यः समर्थश्च मार्तण्डश्चण्डरश्मिभिः ।
तद्वदङ्गैर्निजैर्देवो ध्यातव्यः परमेश्वरः ॥१८५॥
हृदयं तस्य चिच्छक्तिः शिरश्चैश्वर्यमष्टधा ।
नान्याधीनं वशित्वं यत् सा शिखोपरिवर्तिनी ॥१८६॥
अभेद्यं परमेशस्य तेजः कवचमुच्यते ।
प्रतापो दुःसहः शस्त्रमन्तरायापहारकम् ॥१८७॥
नमः स्वधा च स्वाहा च वौषट् चेति यथाक्रमम् ।
हृत्पुरःसरमुच्चार्य पाद्यादीनि निवेदयेत् ॥१८८॥
पाद्यं पादाम्बुजद्वन्द्वे वक्त्रेष्वाचमनीयकम् ।

[1] 'नन्दबोधस्य' ख. पाठ : ।

अर्घ्यं शिरसि देवस्य पुष्पदूर्वाक्षतानि च ॥१८९॥
एवं संस्कृत्य संस्कारैर्दशभिः परमेश्वरम् ।
यजेत्पञ्चोपचारेण विधिना कुसुमादिभिः ॥१९०॥
अभ्यज्ज्योद्वर्त्य निर्भर्त्स्य राजिकालवणादिभिः ।
अर्घोदबिन्दुपुष्पाद्यैर्गण्डुकैः स्नापयेच्छिवम् ॥१९१॥
पयोदधिघृतक्षौद्रशर्कराद्यैरनुक्रमात् ।
ईशादिमन्त्रितैर्भुक्त्यै मुक्त्यै तेषां विपर्ययः ॥१९२॥
तोयधूपान्तरैः सर्वैर्मूलेन स्नापयेच्छिवम् ।
विरूक्ष्य यवचूर्णेन यथेष्टं शीतलं जलम् ॥१९३॥
स्वशक्त्या गन्धतोयेन संस्नाप्य जगदीश्वरम् ।
परिशुद्धेन वस्त्रेण विमृज्यार्घ्यं निवेदयेत् ॥१९४॥
अधो न बन्धयेन्मुद्रां नोपरि भ्रामयेत्करम् ।
सर्वदा कुसुमैः कार्यं लिङ्गस्याशून्यमस्तकम् ॥१९५॥
चन्द्रचन्दनकाश्मीरैः समालभ्य सुगन्धिभिः ।
पुष्पैराभरणैर्वस्त्रैः समभ्यर्च्य शिवाणुना ॥१९६॥
धूपभाजनमस्त्रेण प्रोक्ष्याभ्यर्च्य हृदाणुना ।
अस्त्रेण पूजितां घण्टां वादयन् गुग्गुलं दहेत् ॥१९७॥
दद्यादाचमनं पश्चात्स्वधान्तहृदयाणुना ।
दीपभाजनमस्त्रेण प्रोक्ष्याभ्यर्च्य हृदाणुना ॥१९८॥
आरात्रिकां समुत्सार्य तथैवाचमनं पुनः ।
प्रणम्यादाय देवाज्ञां भोगाङ्गानि प्रपूजयेत् ॥१९९॥
अग्नीशासुरवायूनां दिक्षु चत्वार्यनुक्रमात् ।

हृदयं चन्द्रसंकाशं शिरश्चामीकरप्रभम् ॥२००॥
शिखां सिन्दूरवर्णाढ्यां कवचं भृङ्गभास्वरम्।
नेत्रमग्निप्रतीकाशमस्त्रं स्यात्कृष्णपिङ्गलम् ॥२०१॥
पद्मासनस्थानर्धेन्दुमुकुटानसुधारिणः।
त्रिलोचनांश्चतुर्बाहून्सर्वाभरणभूषितान् ॥२०२॥
शिवस्याभिमुखान् शक्तिशूलाभयवरान्वितान्।
चतुर्वक्त्रान् निजैर्मन्त्रैः पूजयेद्दलसंस्थितान् ॥२०३॥
दंष्ट्राकरालमप्यस्त्रमस्त्रेणाशनिसुप्रभम्।
लिङ्गपूर्वाद्युदीच्यन्तं चतुर्दलगतं यजेत् ॥२०४॥

ॐ हां हूं शिवाय नमः। ॐ हां हृदयाय नमः, ॐ हीं शिरसे स्वाहा, ओं हूं शिखायै नमः, ओं हैं कवचाय नमः, ॐ हौं नेत्रेभ्यो नमः, ओं हः अस्त्राय नमः।

पाद्याचमनमर्घ्यं च हृदादीनां निवेदयेत्।
धूपदीपादिनैवेद्यं तोयमाचमनीयकम् ॥२०५॥
करोद्वर्तनताम्बूलं मुखवासं च दर्पणम्।
दद्यात्सपरिवाराय मूलमन्त्रेण शम्भवे ॥२०६॥
शिरस्यारोप्य देवस्य दूर्वाक्षतपवित्रकम्।
स्तूयमानं विरिञ्च्याद्यैः संतुष्टं भावयेच्छिवम् ॥२०७॥
मानसोपांशुभाष्याणां कुर्यादेकतमं जपम्।
मूलस्याष्टशतं जप्त्वा न द्रुतं न विलम्बितम् ॥२०८॥
हृदाभिमन्त्रितं वर्मवेष्टितं खड्गरक्षितम्।
कुशपुष्पाक्षतोपेतं मुद्रयोद्भवसंज्ञया ॥२०९॥

गुह्यातिगुह्यगोप्ता त्वं गृहाणास्मत्कृतं जपम् ।
सिद्धिर्भवतु मे देव त्वत्प्रसादात्त्वयि स्थिता ॥२१०॥
भोगी श्लोकं पठित्वाम्बुं दद्यहस्तेन शंभवे ।
मूलाणुनार्घतोयेन वरहस्ते निवेदयेत् ॥२११॥
यत्किंचित्कुर्महे कर्म सदा सुकृतदुष्कृतम् ।
तन्मे शिवपदस्थस्य हूं क्षः क्षपय शङ्कर ॥२१२॥
शिवो दाता शिवो भोक्ता शिवः सर्वमिदं जगत् ।
शिवो जयति सर्वत्र यः शिवः सोऽहमेव हि ॥२१३॥
श्लोकद्वयमधीत्यैवं शिवार्पितमना मुनिः ।
जपं मुमुक्षुर्देवाय तथैव विनिवेदयेत् ॥२१४॥
दशांशेन शिवाङ्गानां जपं कृत्वा निवेदयेत् ।
अर्घधूपादिकं दत्त्वा स्तुत्वा च विविधैः स्तवैः ॥२१५॥
शिवं प्रदक्षिणीकृत्य संहृष्टं शिवविग्रहम् ।
भक्त्या प्रणाममष्टाङ्गं विदध्यादष्टमूर्तये ॥२१६॥
समाधिना तपोध्यानधारणाभावनाजपैः ।
निजमूर्तौ गुरोर्मूर्तौ पुस्तके सलिलेऽनले ॥२१७॥
चित्रादौ स्थण्डिले वापि लिङ्गे त्वत्यन्तमुत्तमम् ।
यजनं बहुधा शंभोर्यथादृष्टमुदाहृतम् ॥२१८॥
अथेशादेशमासाद्य यायादग्निनिकेतनम् ।
प्रदक्षिणं ससंभारमर्घपात्रकरो मुनिः ॥२१९॥
यागोपकरणं सर्वं दिव्यदृष्ट्यावलोकनम् ।
कुण्डनाभिं पुरस्कुर्वन्नुपविश्योत्तराननः ॥२२०॥

अतसीपुष्पसंकाशां तत्र देवीं सुलक्षणाम्।
तद्वद्वागीश्वरीं देवीं हृदा विन्यस्य पूजयेत् ॥ २२१ ॥
वह्निं शुद्धाश्रयानीतं शुद्धपात्रोपरिस्थितम्।
क्रव्यादांशं परित्यज्य ईक्षणादिविशोधितम् ॥ २२२ ॥
औदर्यं वैन्दवं भौतमेकीकृत्यानलत्रयम्।
विन्यसेद्वह्निचैतन्यं वह्निबीजेन दैशिकः ॥ २२३ ॥
ओं हूँ वह्निचैतन्याय नमः।
संहितामन्त्रितं वह्निं धेनुमुद्रामृतीकृतम्।
रक्षितं हेतिमन्त्रेण कवचेनावगुण्ठितम् ॥ २२४ ॥
पूजितं त्रिः परिभ्राम्य कुण्डस्योर्ध्वं प्रदक्षिणम्।
शिवबीजमिति ज्ञात्वा वागीशीगर्भगोचरे ॥ २२५ ॥
वागीश्वरेण देवेन क्षिप्यमाणं विभावयेत्।
भूमिस्थजानुको मन्त्री हृदात्मसंमुखं क्षिपेत् ॥ २२६ ॥
ततोऽन्तःस्थितबीजस्य नाभिदेशे समूहनम्।
संवृतिं परिधानस्य शौचमाचमनं हृदा ॥ २२७ ॥
गर्भाग्नेः पूजनं कृत्वा तद्रक्षार्थं शराणुना।
बध्नीयाद्दर्भजं देव्याः कङ्कणं पाणिपल्लवे ॥ २२८ ॥
गर्भाधानाय संपूज्य सद्योजातेन पावकम्।
ततो हृदयमन्त्रेण जुहुयादाहुतित्रयम् ॥ २२९ ॥
पुंसवनाय वामेन तृतीये मासि पूजयेत्।
आहुतित्रितयं दद्याच्छिरसाम्बुकणान्वितम् ॥ २३० ॥
सीमन्तोन्नयनं षष्ठे मासि संपूज्य रूपिणा।

जुहुयादाहुतीस्तिस्रः शिखया शिखयैव च ॥ २३१ ॥
वक्त्राङ्गकल्पनं कुर्याद्वक्त्रोद्घाटननिष्कृती ।
जातकर्म नृवर्मभ्यां दशमे मासि पूजयेत् ॥ २३२ ॥
वह्निं सन्धुक्ष्य दर्भाद्यैः स्नानं गर्भमलापहम् ।
सुवर्णबन्धनं देव्याः कृतं ध्यात्वा हृदार्चयेत् ॥ २३३ ॥
सद्यःसूतकनाशाय प्रोक्षयेदस्त्रवारिणा ।
कुण्डं तु बहिरस्त्रेण ताडयेद्वर्मणोक्षयेत् ॥ २३४ ॥
अस्त्रेणोत्तरपूर्वाग्रान्मेखलासु बहिः कुशान् ।
आस्तीर्य स्थापयेत्तेन हृदा परिधिविष्टरान् ॥ २३५ ॥
वक्त्राणामस्त्रमन्त्रेण ततो नालापनुत्तये ।
समिधः पञ्च होतव्याः प्रान्ते मूले घृतप्लुताः ॥ २३६ ॥
ब्रह्माणं शङ्करं विष्णुमनन्तं च हृदार्चयेत् ।
पूर्वाद्युत्तरपर्यन्तं परिधिस्थाननुक्रमात् ॥ २३७ ॥
इन्द्रादीनीशपर्यन्तान् विष्टरस्थाननुक्रमात् ।
अग्नेरभिमुखीभूतान्निजदिक्षु हृदार्चयेत् ॥ २३८ ॥
निवार्य विघ्नसंघातं बालकं पालयिष्यथ ।
शैवीमाज्ञामिमां तेषां श्रावयेत् तदनन्तरम् ॥ २३९ ॥
गृहीत्वा स्रुक्स्रुवावूर्ध्ववदनाधोमुखौ क्रमात् ।
प्रताप्याग्नौ त्रिधा दर्भैर्मूलमध्याग्रगं स्पृशेत् ॥ २४० ॥
कुशपृष्ठप्रदेशेषु आत्मविद्याशिवात्मकम् ।
क्रमात्तत्त्वत्रयं न्यस्य हां-हीं-हूँ-शम्बरैः क्रमात् ॥ २४१॥
स्रुचि शक्तिं स्रुवे शम्भुंविन्यस्य हृदयाणुना ।

त्रिसूत्रीवेष्टितग्रीवौ पूजितौ कुसुमादिभिः ॥२४२॥
कुशानामुपरिष्टात् तौ स्थापयित्वा स्वदक्षिणे ।
गव्यमाज्यं समादाय वीक्षणादिविशोधितम् ॥२४३॥
स्वकां ब्रह्ममयीं मूर्तिं संचिन्त्यादाय तद्घृतम् ।
कुण्डोर्ध्वं तु त्रिधावर्त्य तापयित्वाग्निगोचरे ॥२४४॥
पुनर्विष्णुमयीं ध्यात्वा घृतमीशानगोचरे ।
धृत्वादाय कुशाग्रेण स्वाहान्तं शिरसाणुना ॥२४५॥
जुहुयाद्विष्टरे बिन्दुं रुद्ररूपमनन्तरम् ।
भावयेन्निजमात्मानं नभो वृत्वा[1] प्लवेत तत् ॥२४६॥
प्रादेशमात्रदर्भाभ्यामङ्गुष्ठानामिकाग्रगैः ।
धृताभ्यां संमुखं वह्नेरस्त्रेणोत्प्लवमाचरेत् ॥२४७॥
हृदात्मसंमुखं कृत्वा कुर्यात्संप्लवनं ततः ।
हृदा लब्धदग्धदर्भमस्त्रक्षेपात्परिभ्रमेत् ॥२४८॥
दीप्तेनोपरि दर्भेण नीराज्यानेन दीपयेत् ।
अस्त्रमन्त्रेण दिग्बन्धं वह्नौ दर्भं परिक्षिपेत् ॥२४९॥
क्षिप्त्वा घृते [2]कृतग्रन्थिं कुशं प्रादेशसंमितम् ।
पक्षद्वयमिडादीनां त्रयं चाज्ये विभागयेत् ॥२५०॥
क्रमाद्भागत्रयादाज्यं स्रुवेणादाय होमयेत् ।
स्वेत्यग्नौ हेति तद्भागे शेषमाज्यं क्षिपेत्क्रमात् ॥२५१॥

ॐ हां अग्नये स्वाहा, ॐ हां सोमाय स्वाहा, ॐ हां अग्नीषोमाभ्यां स्वाहा ।

---

१ 'धृत्या' क. । २ 'घृतग्रन्थिं' क. ख. पाठः ।

उद्घाटनाय नेत्राणामग्नेर्नेत्रत्रये मुखे ।
स्रुवेण घृतपूर्णेन चतुर्थीमाहुतिं यजेत् ॥२५२॥

ओं हां अग्नये स्विष्टकृते स्वाहा ।

अभिमन्त्र्य षडङ्गेन रेचयेद्धेनुमुद्रया ।
अवगुण्ठ्य तनुत्रेण रक्षेदाज्यं शराणुना ॥२५३॥
हृदाज्यबिन्दुप्रक्षेपात्कुर्यादन्याज्यशोधनम् ।
वक्त्राभिघारं तत्सन्धि वक्त्रैकीकरणं ततः ॥२५४॥

ओं हां सद्योजाताय स्वाहा, ओं हां वामदेवाय स्वाहा, ओं हां अघोराय स्वाहा, ओं हां तत्पुरुषाय स्वाहा, ओं हां ईशानाय स्वाहा ।

एकैकया घृताहुत्या एतद्वक्त्राभिघारणम् ।

ओं हां सद्योजातवामदेवाभ्यां स्वाहा, ओं हां वामदेवाघोराभ्यां स्वाहा, ओं हां अघोरतत्पुरुषाभ्यां स्वाहा, ओं हां तत्पुरुषेशानाभ्यां स्वाहा ।

इति वक्त्रानुसन्धानं तथैव परिकीर्तितम् ॥२५५॥
अग्नितो गतया वायुं नैर्ऋत्यादिशिवान्तया ।
वक्त्राणामेकतां कुर्यात्स्रुवेण घृतधारया ॥२५६॥

ओं अं सद्योजातवामदेवाघोरतत्पुरुषेशानेभ्यः स्वाहा

इतीष्टवक्त्रवक्त्रान्तर्भाववक्त्रैक्यकल्पनम् ।
अथवा कुण्डमानत्वं यदीष्टवदने स्मरेत् ॥२५७॥
अन्तर्भाव्यानि वक्त्राणि तदेकीकरणं मतम् ।

ईशानव[1]ह्निमभ्यर्च्य दत्त्वास्त्रेणाहुतित्रयम् । ॥२५८॥
कुर्यात्सर्वात्मना नाम शिवाग्नित्वं हुताशने ।
हृदार्चितौ विसृज्याग्नेः पितरौ विधिपूर्वकम् ॥२५९॥
मूलेन वौषडन्तेन दद्यात्पूर्णां यथाविधि ।
ततो हृदम्बुजे साङ्गं[2]सासनं भास्वरं परम् ।।२।६०॥
यजेत्पूर्ववदावाह्य प्रार्थ्याज्ञां तर्पयेच्छिवम् ।
यागाग्निशिवयोः कृत्वा नाडीसन्धानमात्मना ॥२६१॥
शक्त्यामलाणुना होमं कुर्यादङ्गैर्दशांशतः ।
घृतस्य कार्षिको होमः क्षीरस्य मधुनस्तथा ॥२६२॥
शुक्तिमात्राहुतिर्दध्नः प्रसृतिः पायसस्य च ।
पथ्यावत्सर्वभक्ष्याणां लाजानां मुष्टिसंमितम् ॥२६३॥
खण्डत्रयं च मूलानां फलानां स्वप्रमाणतः ।
ग्रासार्धमात्रमन्नानां पश्च सूक्ष्माणि होमयेत् ॥२६४॥
इक्षोरापर्विकं मानं लतानामङ्गुलद्वयम् ।
पुष्पं पत्रं स्वमानेन समिधस्तु दशाङ्गुलाः ॥२६५॥
चन्द्रचन्दनकाश्मीरकस्तूरीयक्षकर्दमान् ।
कलायसंमितानेतान् गुलुं बदरास्थिवत् ॥२६६॥
कन्दानामष्टमं भागं जुहुयाद्विधिना परम् ।
होमं निवर्तयेदेवं ब्रह्मबीजपदैः ततः ॥२६७॥
घृतेन स्रुचि पूर्णायां निधायाधोमुखं स्रुवम् ।
स्रुगग्रे पुष्पमारोप्य पश्चाद्वामेन पाणिना ॥२६८॥

---

१ 'ईशाने' ख. । २ 'साङ्गमासनं' क. पाठः ।

पुनः सव्येन तौ धृत्वा शंखसंनिभमुद्रया।
समुन्नतोर्ध्वकायस्तु समपादः समुत्थितः ॥२६६॥
नाभौ तन्मूलमादाय स्रुगग्रव्यग्रलोचनः।
ब्रह्मादिकारणत्यागाद्विनिःसृत्य सुषुम्नया ॥२७०॥
वामस्तनान्तमानीय तयोर्मूलमतन्द्रितः।
मूलमन्त्रमतिस्पष्टं वौषडन्तं समुच्चरन् ॥२७१॥
तदग्नौ जुहुयादाज्यं यवसंमितिधारया।
आचामं चन्दनं दत्त्वा ताम्बूलप्रभृतीनपि ॥२७२॥
भक्त्या तद्भूतिमावर्त्य विदध्यात्प्रणतिं पराम्।
वह्नौ शिवमथाभ्यर्च्य फडन्तास्त्रेण शम्बरान् ॥२७३॥
संहारमुद्रयाहृत्य क्षमस्वेत्यभिधाय च।
शम्बरान्परिधिस्थांश्च पूरकेन हृदाणुना ॥२७४॥
श्रद्धया परयात्मीये स्थापयेद्धृदयाम्बुजे।
सर्वपाकाग्रमानीय कृत्वा मण्डलकद्वयम् ॥२७५॥
अन्तर्बहिर्बलिं दद्यादाग्नेय्यां कुण्डसंनिधौ।

ओं हां रुद्रेभ्यः स्वाहा पूर्वे, ओं हां मातृभ्यः स्वाहा दक्षे, ओं हां गणेभ्यः स्वाहा पश्चिमे, ओं हां यक्षेभ्यः स्वाहा उत्तरे, ओं हां ग्रहेभ्यः स्वाहा ईशाने, ओं हां असुरेभ्यः स्वाहा आग्नेये, ओं हां रक्षोभ्यः स्वाहा नैरृते, ओं हां नागेभ्यः स्वाहा वायव्ये, ओं हां नक्षत्रेभ्यः स्वाहा मण्डलमध्ये ईशाने, ओं हां राशिभ्यः स्वाहा आग्नेये, ओं हां विश्वेभ्यः स्वाहा नैरृते, ओं हां क्षेत्रपालेभ्यः

स्वाहा वरुणानिलयोर्मध्ये इति अन्तर्बलिविधानम् । अथ द्वितीयमण्डले ॐ हां इन्द्राय स्वाहा, ॐ हां अग्नये स्वाहा, ॐ हां यमाय स्वाहा, ॐ हां नैर्ऋतये स्वाहा, ॐ हां वरुणाय स्वाहा, ॐ हां वायवे स्वाहा, ॐ हां कुबेराय स्वाहा, ॐ हां ईशानाय स्वाहा ; इति ईशानान्तं दिक्षु ; ॐ हां ब्रह्मणे स्वाहा ऊर्ध्वभागमुद्दिश्य ईशाने, ॐ हां विष्णवे स्वाहा अधोभागमुद्दिश्य नैर्ऋतदिशि, ॐ हां क्षेत्रपालाय स्वाहा तयोर्मध्ये; ततो मण्डलात् बहिर्वायसादिभ्यः समयभेदिभ्यः स्वाहा ; इति बहिर्बलिविधानम् । यागमण्डलात् बहिर्वा बलिर्देयः । ततो बलिद्वयमन्त्रान्संहारमुद्रया आत्मनि निवेशयेत् ॥

अथ संक्षेपतो दृष्टं लीलावत्यां शिवागमे ॥२७६॥
कुण्डे वा स्थण्डिले वापि वह्निकार्यं तदुच्यते ।
चक्षुषा न्यस्तमूलेन वीक्ष्य प्रोक्ष्य शराणुना ॥२७७॥
हूँफडन्तेन सन्ताड्य क्रव्यादांशं परित्यजेत् ।
अभ्युक्ष्य वर्मणा तत्र ॐ हांहांहां वह्निमूर्तये ॥२७८॥
संहारमुद्रयानेन बिन्दौ वह्निं निवेशयेत् ।
पूरकेण ततो नाभौ विश्राम्योद्भवमुद्रया ॥२७९॥
रेचकेन प्रयोगेन ॐ हांहूं वह्नये नमः ।
इत्याग्नेयाणुना बीजं प्रदीपकलि[1]कोपमम् ॥२८०॥
कुण्डस्थे पावके न्यस्य पश्च ब्रह्माणि पूजयेत् ।

---

१ 'कर्णिकोपमम्' क. पाठः।

आहुतीः पञ्च मूलेन जुहुयात्तदनन्तरम् ॥२८१॥
ध्रुवाद्येन हृदा नाम शिवाग्निस्त्वमिति न्यसेत् ।
ब्रह्माणं शङ्करं विष्णुमनन्तं च हृदार्चयेत् ॥२८२॥
पूर्वाद्युत्तरपर्यन्तं दिक्षु कुण्डाद्बहिः क्रमात् ।
उदग्वाधारशक्त्यादि शिवमभ्यर्च्य पूर्ववत् ॥२८३॥
जुहुयान्मूलमन्त्रेण शतं चाङ्गैश्च दशांशतः ।
शिवं विसृज्य भूरादित्रयस्य प्रणवान्वितम् ॥२८४॥
क्रमेण यौगपद्येन दत्त्वाहुतिचतुष्टयम् ।
ओंहूंहूंहूं हृदयायेति पठित्वा मनसा सह ॥२८५॥
वह्निं च विसृजेद्देवमिति लीलावतीमतम् ।
ततः शिवान्तिकं गत्वा पूजाहोमादिकं मम ॥२८६॥
गृहाण भगवन्पुण्यफलमित्यभिधाय च।
अर्घोदकेन देवाय मुद्रयोद्भवसंज्ञया ॥२८७॥
हृद्बीजपूर्वमूलेन स्थिरचित्तो निवेदयेत् ।
ततः पूर्ववदभ्यर्च्य स्तुत्वा स्तोत्रैः प्रणम्य च ॥२८८॥
अर्घं पराङ्मुखो दत्त्वा क्षमस्वेत्यभिधाय च ।
नाराचमुद्रयास्त्रेण फडन्तेनाणुसंचयम् ॥२८९॥
संहृत्य दिव्यया लिङ्गे मूर्ध्नि मन्त्रेण योजयेत् ।
स्थण्डिले चार्चिते देवे मन्त्रसंघातमात्मनि ॥२९०॥
नियोज्य विधिनोक्तेन विदध्याच्चाणुपूजनम् ।
गोमयालिप्तभूभागे यद्वा पीठेऽम्बरावृते ॥२९१॥

अर्चयेद्दिशि भर्गस्य यथाचण्डं तदुच्यते।
ओं ओं ओं चण्डासनाय स्वाहा, ओं ओं चण्डमूर्तये नमः, ओं ध्वनिचण्डेश्वराय हूं फट् स्वाहा; इत्यनेन आवाह्य, ओं चण्डहृदयाय फट् नमः, ओं चण्डशिरसे हूं फट् नमः, ओं चण्डकवचाय हूं फट् नमः, ओं चण्डास्त्राय हूं फट नमः इति हस्तेऽस्त्रमिति सकलीकृत्य ध्यायेत्।

रुद्राग्निप्रभवं चण्डं कज्जलाभं भयानकम् ॥२६२॥
शूलटङ्कधरं रौद्रं चतुर्वक्त्रं चतुर्भुजम।
मुखोद्गीर्णमहाज्वालं रक्तं द्वादशलोचनम् ॥२६३॥
जटामुकुटखण्डेन्दुमण्डितं फणिकङ्कणम्।
व्यालयज्ञोपवीतं च साक्षसूत्रकमण्डलुम् ॥२६४॥
श्वेतपद्मासनासीनं भक्तिप्रह्वार्तिनाशनम्।
मण्डले चन्द्रखण्डाभे टङ्काकारेऽथवार्चयेत् ॥२६५॥
यथाशक्ति जपं कुर्यादङ्गानां च दशांशतः।
गोभूहिरण्यवस्त्रादि मणिहेमादिभूषणम् ॥२६६॥
विहायाशेषनिर्माल्यं चण्डेशाय निवेदयेत्।
ओं ध्वनिचण्डेश्वराय हूं फट् स्वाहा; इति मन्त्रेण
लेह्यद्रव्यान्नपानादि ताम्बूलं स्रग्विलेपनम् ॥२६७॥
निर्माल्यं भोजनं तुभ्यं प्रदत्तं तु शिवाज्ञया।
सर्वमेतत्क्रियाकाण्डं मया चण्ड तवाज्ञया ॥२६८॥
न्यूनाधिकं कृतं मोहात्परिपूर्णं सदास्तु मे।
इति विज्ञाप्य चण्डेशं दत्त्वार्घं तस्य शम्बरान् ॥२६९॥

संहरेन्मूर्तिमन्त्रेण शनैः संहारमुद्रया ।
ओं चण्डेशमूर्तये नमः ।
पूरकान्वितमूलेन मन्त्रेणात्मनि योजयेत् ॥३००॥
निर्माल्यापनये स्थानं लिम्पेद् गोमयवारिणा ।
प्रोक्ष्यास्त्रवारिणा स्थानं विसृज्यार्घं करादिकम् ॥३०१॥
प्रक्षाल्य सम्यगाचम्य न्यासं कुर्याद्यथोदितम् ।
अथ कपिलार्चनम् । ओं कपिले सुभद्रे नमः, ओं कपिले सुरभये नमः, ओं कपिले सुमनसे नमः,
अमृतमथनोद्भूता सुरभे लोकधारिणि ॥३०२॥
इमं ग्रासं गृहाण त्वमेवं मे व्रतमुत्तमम् ।
गवां ग्रासो यथा देयः सौरभेयाय वै तथा ॥३०३
तुल्यमेतत्फलं दृष्टं किंतु मन्त्रः पृथक् पृथक् ।
सर्वलोकधरा ह्येते जीवितान्नप्रदायिनः ॥३०४॥
ग्रासं गृह्णन्तु वृषभा एतन्मे व्रतमुत्तमम् ।
नित्यं परगवे दद्याद् गृहीत्वा व्रतमुत्तमम् ॥३०५॥
रक्षन्ति च भयाद्घोरात्स्पर्शेन पापनाशनाः ।
सौरभेयि जगत्मातर्देवानाममृतप्रदे ॥३०६॥
गृहाण वरदे ग्रासमीप्सितार्थं च देहि मे ।
वन्दितासि वसिष्ठेन विश्वामित्रेण जह्नुना ॥३०७॥
कपिले हर मे पापं यन्मया दुष्कृतं कृतम् ।
गावो ममाग्रतो नित्यं गावः पृष्ठत एव मे ॥३०८॥
गावो मे हृदये चापि गवां मध्ये वसाम्यहम् ।

एतं जपन्नरो मन्त्रं त्रिसन्ध्यं नियतः शुचिः ॥३०९॥
विमुक्तः सर्वपापेभ्यः शिवलोकं स गच्छति ।
इति कपिलार्चनम् ॥
अथ विद्यां समभ्यर्च्य पुष्पधूपस्रगादिभिः ॥३१०॥
सम्यक् संपूजयेद्भक्त्या गुरोश्चरणपङ्कजे ।
मध्याह्नसमयं यावत्कृत्वा स्वाध्यायमीप्सितम् ॥३११॥
अर्चयेत्परमेशानं कृत्वा स्नानादि पूर्ववत् ।
पूर्वार्चितेऽथवा देवे प्रदद्यादष्टपुष्पिकाम् ॥३१२॥
पीठमूर्तिशिवाङ्गानां पूजा स्यादष्टपुष्पिका ।
विधिं माध्याह्निकं कृत्वा रम्ये भोजनमन्दिरे ॥३१३॥
विविक्ते गोमयालिप्ते विशुद्धं पाकमानयेत् ।
ततो मृत्युञ्जयेनैव वौषडन्तेन सप्तधा ॥३१४॥
जप्तैः सदर्भशङ्खस्थैः सिञ्चेत् तं वारिबिन्दुभिः ।
सर्वपाकाग्रमुद्धृत्य शिवायार्धं निवेदयेत् ॥३१५॥
अन्यार्धं चुल्लिकाहोमे विधानायोपकल्पयेत् ।
विशोध्य विधिना चुल्लीं तद्वह्निं पूरकाहृतम् ॥३१६॥
कृत्वा नाभ्यग्निना चैक्यं ततो रेचकवायुना ।
वह्निबीजं समादाय हृदि स्थानगतिक्रमात् ॥३१७॥
शिवाग्निस्त्वमिति ध्यात्वा चुल्लिकाग्नौ निवेशयेत् ।
ओं हां अग्नये नमः, ओं हां सोमाय नमः, ओं हां सूर्याय नमः, ओं हां बृहस्पतये नमः, ओं हां प्रजापतये नमः, ओं हां सर्वेभ्यो देवेभ्यो नमः, ओं हां विश्वेभ्यो

नमः, ॐ हां अग्नये स्विष्टकृते नमः ।

वह्न्यादिपूर्वपर्यन्तं पूजयित्वानले क्रमात् ॥३१८॥
स्वाहान्तमाहुतीर्दत्त्वा क्षमयित्वा विसर्जयेत् ।

ॐ धर्माय नमः इति चुल्ल्या दक्षिणबाहौ, ॐ अधर्माय नमो वामबाहौ, ॐ सरसरपरिवर्तनाय नमः इति काञ्जन्यादिसन्धानभाण्डेषु, ॐ जलाश्रयाय वरुणाय नमः इति चलभाण्डेषु, ॐ महाविघ्नराजाय नमः इति गृहप्रधानद्वारे, ॐ नन्दिने नमः, ॐ सुभगे नमः, ॐ सुमङ्गले नमः, ॐ भद्रङ्करि नमः आग्नेयादिकोणेषु, ॐ वास्त्वधिपतये ब्रह्मणे नमो ब्रह्मस्थाने, ॐ हिरण्यकेश्यै नमः; इति पेषण्यां, ॐ रौद्रे कोटिगिरिके नम इति उलूखले, ॐ बलभद्रप्रियाय प्रहरणाय नमः इति मुसले, मृत्यवे देवमोदिताय नमः इति संमार्जन्याम्, कामाय कुसुमायुधाय नमः इति शयनीयशिरसि, ॐ स्कन्दाय [1]गृहाधिपतये नमः इति मध्यस्तम्भस्य अधस्तात् ।

इति वास्तुबलिं सर्वं निर्वर्त्य विधिपूर्वकम् ॥३१९॥
धौतपादः समाचान्तः स्थानमास्थाय पावनम् ।
शिवभक्तैः सदाचारैः शुद्धशैवतपोधनैः ॥३२०॥
परस्परमसंकीर्णैरुपविष्टैरनाकुलैः ।
सवर्णैरेकया पङ्क्त्या भुञ्जीतान्तर्मना मुनिः ॥३२१॥
सौवर्णे राजते ताम्रे लोहपात्रे सुसंस्कृते ।

---

१ 'ब्रह्मा' क. पाठः ।

आचार्यः साधकः पुत्रः समयी च ॥३२२॥
अग्रं परिहृतं[2] कृत्वा परितो भस्मरेखया ।
चतुर्दिगाननो मौनी पात्राभावे तु ताम्रजे ॥३२३॥
साधारणेऽथवा कांस्ये सप्तधा भस्मशोधिते ।
मन्त्रिते बहुरूपेण पात्रे भुञ्जीत भोजनम् ॥३२४॥
पलाशपद्मिनीचूतमधूककदलीदलैः ।
अन्यैश्चानिन्दितैः पात्रैर्भोक्तव्यं तुल्यजातिभिः ॥३२५॥
वटाश्वत्थार्कवातारिसर्जभल्लातकोद्भवैः ।
एवमादिभिरन्यैश्च निषिद्धैर्नाद्यते दलैः ॥३२६॥
जानुमध्यकरो मौनी बद्धवीरासनोऽथवा ।
लग्नवामकरः पात्रे पूर्ववन्मन्त्रितौदनः ॥३२७॥
औदर्यं ज्वलितं ध्यात्वा हेतिमन्त्रेण पावकम् ।
अन्नं पवित्रमश्नीयात्सूपयुक्तं घृतप्लुतम् ॥३२८॥
अपोशानं पुरोधाय प्राणाद्यैः प्रणवान्वितैः ।
स्वाहान्तैराहुतीः पञ्च दत्त्वाऽऽदीप्योदरानलम् ॥३२९॥

ओं नागकूर्मकृकरदेवदत्तधनञ्जयेभ्य उपप्राणवायुभ्यः स्वाहा ; इति अपोशानजलेन भक्तादिकं निवेद्य, शेषजलं ओं अमृतोपस्तरणमसि; इत्यनेन मन्त्रेण प्राश्य , ओं प्राणाय स्वाहा , ओं अपानाय स्वाहा, ओं समानाय स्वाहा , ओं उदानाय स्वाहा, ओं व्यानाय स्वाहा,

इति प्राणाहुतिं दत्त्वा भुक्त्वा च विधिना ततः ।

---

१ 'ते' ख पाठः ।

ओं अमृतापिधानमसि ; इति

प्रक्षालितेन हस्तेन आचमेच्चुलकाम्बुना ॥३३०॥

ग्रासैः परिमितैर्भागं भागं तोयेन पूरयेत्।

इति

प्राणसंचारणायांशमुदरस्य न पूरयेत् ॥३३१॥

मधुस्निग्धं च [1]कवकं पलाण्डुं लशुनामिषम्।

गृञ्जनं हस्तदत्तं च लवणं च विवर्जयेत् ॥३३२॥

आदधीत प्रभुञ्जानो लवणं न नवा घृतम्।

मूर्धापिधानमौत्कण्ठ्यं कुत्सनं जृम्भणं त्यजेत् ॥३३३॥

नोन्नाम्योर्ध्वं पिबेद्वारि न प्रक्षालितपाणिना।

न विस्तारितवक्त्रेण नचाधो नान्यचेतसा ॥३३४॥

मक्षिकानखकेशादिजुष्टं त्यक्त्वाल्पभोजनम्।

शेषं क्षालितहस्तेन भुञ्जीत स्पृष्टभस्मना ॥३३५॥

अद्भिर्यथावदाचम्याङ्गुष्ठं पादस्य दक्षिणम्।

सिञ्चेद्दक्षिणमुष्टिस्थादङ्गुष्ठाग्राच्च्युताम्भसा ॥३३६॥

आत्मा वै दक्षिणे पादे परात्परतरो विभुः।

तमद्भिरभिषिञ्चामि योऽङ्गुष्ठाग्रे व्यवस्थितः ॥३३७॥

पूर्ववत्सकलीकृत्य भुक्तदोषनिवृत्तये।

मुद्रामानाभिनासान्तं बध्नीयात्परिघाह्वयाम् ॥३३८॥

इति सान्तानिकभोजनविधिः ॥

आनीयायाचमानाय श्रद्धया यत्प्रदीयते।

---

१ कवकं 'ह्यडरु' इतिप्रसिद्धं, तत्मधुमिश्रितं न भक्षयेत्।

अन्नादिभूमिपर्यन्तं सा भिक्षा स्यादयाचिता ॥३३९॥
पतितान्नापितात्कारोरभिशस्तात् तथान्त्यजात् ।
धर्मोन्निनीषया भिक्षां भिक्षुरभ्याददीत न ॥३४०॥
यथा मध्वाददानोऽपि भृङ्गः पुष्पं न बाधते ।
तद्वन्माधुकरीं भिक्षामाददीत गृहाधिपात् ॥३४१॥
एताः सोमवदादेया भुक्तिमुक्तिफलार्थिभिः ।
आसां माधुकरी श्रेष्ठा सदैकान्नं च वर्जयेत् ॥३४२॥
माधूकरीं चरेद्भिक्षामपि म्लेच्छकुलाद्बुधः ।
एकान्नं तु न भुञ्जीत बृहस्पतिसमो यदि ॥३४३॥
एताभ्यस्त्वपरां भिक्षां प्रार्थनादुपरोधतः ।
साध्यां भिक्षुर्निरोधाख्यामधमां परिवर्जयेत् ॥३४४॥
भिक्षार्थं ताम्रजं लौहं ब्रह्मवृक्षादिपत्रजम् ।
बुभुक्षोर्विहितं पात्रं मुमुक्षोस्तुम्बिकादिजम् ॥३४५॥
पवित्रं शिक्यकालम्बि बहुरूपाभिमन्त्रितम् ।
तनुत्रजप्तकाषायशुचिवस्त्रावगुण्ठितम् ॥३४६॥
विशुद्धभस्मना स्नातं कौपीनं सोत्तरीयकम् ।
परिवर्त्य समाचम्य मौनी ध्यात्वा शिवं गुरुम् ॥३४७॥
तयोराज्ञां समादाय दण्डं चास्त्राभिमन्त्रितम् ।
आतपत्रकरो यायाद्भिक्षार्थं शुद्धवेश्मसु ॥३४८॥
ततो घ्राणमलष्ठीवस्पर्शमुन्मार्गसर्पणम् ।
कुत्सनं च न कुर्वीत त्यजेदश्वादिसंकुलम् ॥३४९॥

चतुर्णां शुद्धवर्णानां समासाद्य गृहाङ्गनम् ।
भिक्षां देहीति संजल्प्य पादाङ्गुष्ठाग्रलोचनः ॥३५०॥
तावत्कालं प्रतीक्षेत यावद्गौ वत्सयोगतः ।
प्रस्नवं समवाप्नोति ततोऽन्यत्र व्रजेन्मुनिः ॥३५१॥
व्रजन्नपि समाहूतो न गच्छेत् तत्प्रदेशतः ।
यजमानजनानीतां भिक्षां तत्रैव ग्राहयेत् ॥३५२॥
न दर्व्या नच हस्तेन न कांस्येनाददधीत ताम् ।
वृषलीगुर्विणीस्नानवस्त्राणां न करेण च ॥३५३॥
ततो भिक्षामटित्वेत्थं पात्रमूर्धविसानकम् ।
लोकानां शुभमाशंसन् व्रजेदाश्रममात्मनः ॥३५४॥
भिक्षापात्रं शुचिस्थाने धृत्वाचम्य यथाविधिः ।
उद्धूल्य[1] सकलीकृत्य तां प्रोक्ष्यास्त्रेण दीपयेत् ॥३५५॥
त्र्यक्षरेखामृतीकृत्य कुर्याद्भागत्रयं व्रती ।
भागं निवेद्य देवाय गुरवे च द्वितीयकम् ॥३५६॥
तृतीयं प्राणरक्षार्थमुपभुञ्जीत पूर्ववत् ।
सिद्धान्ते भोजनस्यायं विधिरुक्तः समासतः ॥३५७॥
अथ साध्यात्मयोगेन सन्ध्यामासाद्य पश्चिमाम् ।
स्नानं सन्ध्यार्चनं कृत्वा पूजयित्वा महेश्वरम् ॥३५८॥
विशुद्धे भूतले शुद्धतृणच्छन्ने मृगत्वचम् ।
शार्दूलचर्म कन्थां वा प्रस्तीर्योपरि संविशेत् ॥३५९॥
कृतमन्त्रतनुर्मौनी हृदम्भोरुहवर्तिनम् ।

---

१ 'तद्धूलि' क. पाठः ।

चिन्तयन्नन्तरात्मानं शयीत योगनिद्रया[1] ॥३६०॥
ततो द्विवोपनीतेन वस्त्रपूतेन वारिणा।
सन्ध्यां शिवार्चनं कृत्वा निशीथेऽपि यथा पुरा ॥३६१॥
पुनः सुप्तः समुत्थाय प्रातः संचिन्त्य शङ्करम्।
यथोद्दिष्टं क्रियाकाण्डं सर्वं प्रत्यहमाचरेत् ॥३६२॥
गोव्रीलवंश्यपादानां शिष्यः सोमशिवाभिधः।
कर्मकाण्डक्रमावल्यां नित्यकर्मविधिं व्यधात् ॥३६३॥

इति नित्यकर्मविधिः समाप्तः ॥

अथ पवित्रारोपणं

सर्वपूजाविधिच्छिद्रपूरणाय पवित्रकम्।
कर्तव्यमन्यथा मन्त्री सिद्धिभ्रंशमवाप्नुयात् ॥३६४॥
आषाढादिचतुर्दश्यामथ श्रावणभाद्रयोः।
सितासितासु कर्तव्यं चतुर्दश्यष्टमीषु च ॥३६५॥
एतेषु त्रिषु मासेषु ज्येष्ठमध्याधमक्रमात्।
शंभोः पवित्रमुद्दिष्टमन्यथा दोषकारकम् ॥३६६॥
आषाढादिषु त्रिष्वेव सुप्त एव जनार्दने।
पवित्रं विदधीतैव श्रौतोऽसौ नियमस्त्रिधा ॥३६७॥
प्रत्यहं न विधेयत्वान्नायं नित्यविधिर्मतः।
पवित्रं कालनैयत्यान्नैमित्तिकमिदं मतम् ॥३६८॥
विघ्नापहारपूर्त्यादिफलमस्योपगीयते।
मोहशूरोत्तरेऽस्माभिर्दृष्टं चेदं शिवागमे ॥३६९॥

---

[1] 'मुद्रया' क.।

तस्मान्नैमित्तिकं नाम पवित्रकमिदं स्मृतम्[1] ।
नित्यं तु नित्यपूजायां पत्रपुष्पकुशादिभिः ॥३७०॥
पवित्रमन्यकालेऽपि प्रत्यहं परिकल्पयेत् ।
वह्निब्रह्माम्बिकेभास्यनागस्कन्दार्कशूलिनाम् ॥३७१॥
दुर्गायमेन्द्रगोविन्दस्मरशंभुसुधाभुजाम् ।
अन्येषां सर्वदेवानां विधातव्यं पवित्रकम् ॥३७२॥
प्रतिपत्तः समारभ्य यावत्पञ्चदशीं क्रमात् ।
सौवर्णं राजतं ताम्रं कृतादिषु यथाक्रमम् ॥३७३॥
कलौ कर्पासजं वापि यथाशक्ति पवित्रकम् ।
कर्तितं द्विजकन्याभिस्त्रिगुणं त्रिगुणीकृतम् ॥३७४॥
धौतं शुष्कं शुभं सूत्रमन्यदप्युपयुज्यते ।
पट्टवल्कलपद्मोत्थं क्षौमं दर्भशणोद्भवम् ॥३७५॥
मुञ्जादिसंभवं सूत्रं पवित्राय प्रशस्यते ।
प्रणवश्चन्द्रमा वह्निर्ब्रह्मा नागो गुहो रविः ॥३७६॥
सादाख्यः सर्वदेवाश्च क्रमेण नवतन्तुषु ।
अष्टोत्तरशतेनैकं सूत्राणां स्यात्पवित्रकम् ॥३७७॥
इत्थं त्रीणि तदर्धेन विंशत्या वा ससप्तया ।
एकाशीत्याथवा सूत्रैस्त्रिंशता वाष्टयुक्तया ॥३७८॥
पञ्चाशता वा कर्तव्यं तुल्यग्रन्थ्यन्तरालकम् ।
द्वादशाङ्गुलमानानि व्यासादष्टाङ्गुलानि च ॥३७९॥
लिङ्गविस्तारमानानि चतुरङ्गुलकानि वा ।

1 'स्फुटम्' ख. पाठः ।

तथैव पिण्डिकास्पर्शि चतुर्थं सार्वदैवतम् ॥३८०॥
गङ्गावतारकं कार्यं पवित्रमतिसुन्दरम् ।
धौतं सूत्रमजातेन ग्रथितं गुह्यकेन तु ॥३८१॥
शोधितं बहुरूपेण वक्त्रमन्त्रेण रञ्जयेत् ।
रक्तचन्दनकाश्मीरकस्तूरीचन्द्ररोचनाः ॥३८२॥
हरिद्रा गैरिकं चैषां रञ्जेदेकतमेन तत् ।
ग्रन्थयो दश कर्तव्या अथवा तत्त्वसंख्यया ॥३८३॥
अन्तरं वा यथाशोभमेकद्विचतुरङ्गुलम् ।
प्रकृतिः पौरुषी वीरा चतुर्थी त्वपराजिता ॥३८४॥
[1]पञ्चमी तु जया षष्ठी ह्यजिता सप्तमी क्रिया ।
शिवा मनोन्मनी चैव दशमी सर्वतोमुखा ॥३८५॥
अधिका वा यथाशोभं कर्तव्या ग्रन्थयः समाः ।
रत्नजे स्थण्डिले बाणे चले लौहे स्वयम्भुवि ॥३८६॥
यथोदितं पवित्राणामेकं कार्यं यथारुचि ।
चण्डेशरविवह्नीनां शिववत्सूत्रसंपदि ॥३८७॥
अन्यथैकैकमेतेषां विदधीत पवित्रकम् ।
निजमूर्तौ गणाधीशे गुरुपादे च पुस्तके ॥३८८॥
स्यादेकैकं तथा द्वारदिक्पालकलशाग्निषु ।
एकादिनवहस्तान्तं लिङ्गानां स्यात्पवित्रकम् ॥३८९॥
अष्टाविंशतितो वृद्ध्या दशभिर्दशभिः क्रमात् ।
द्व्यङ्गुला द्व्यङ्गुलास्तत्र क्रमादेकाङ्गुलोत्तराः ॥३९०॥
ग्रन्थयो 'मानमप्येषां लिङ्गविस्तारसंमितम् ।

[1] 'जयन्ती विजया षष्ठी' ग. पाठः ॥

सप्तम्यां वा त्रयोदश्यां कृतनित्यक्रियः शुचिः ॥३६१॥
भूषयेत्पुष्पवस्त्राद्यैः सायाह्ने यागमन्दिरम्।
कृत्वा नैमित्तिकीं सन्ध्यां विशेषेण च तर्पणम् ॥३६२॥
परिगृहीते भूभागे स्वत्रिते स्वर्यमर्चयेत्।
आचम्य सकलीकृत्य प्रणवार्ककरो गुरुः ॥३६३॥
द्वाराण्यस्त्रेण संप्रोक्ष्य पूर्वादिक्रमतोऽर्चयेत्।

ओं शान्तिकलाद्वाराय नम इति पूर्वे, ओं विद्याकलाद्वाराय नमो दक्षिणे, निवृत्तिकलाद्वाराय नमः पश्चिमे, प्रतिष्ठाकलाद्वाराय नम उत्तरे; तथैव एतच्छाखयोः, ओं हां नन्दिने नमः, ओं हां महाकालाय नमः, ओं हां भृङ्गिणे नमः, ओं हां विनायकाय नमः, ओं हां वृषभाय नमः, ओं हां स्कन्दाय नमः, ओं हां देव्यै नमः, ओं हां चण्डाय नमः। इति।

प्रतिष्ठाद्वारशाखायां द्वौ द्वौ संपूजयेद्गणौ ॥३६४॥
नित्यवद्द्वारपालादीनभ्यर्च्य विधिनान्तरम्।
प्रविश्य पश्चिमं द्वारं वास्तुनाथं प्रपूजयेत् ॥३६५॥
भूतशुद्धिं विशेषार्घं[1] स्वशिरःप्रोक्षणादिकम्।
विधाय यज्ञसंभारं पूर्ववत्परिमन्त्रयेत् ॥३६६॥
दर्भदूर्वाक्षतैः पुष्पैश्चन्दनेन हृदादिभिः।
शिवहस्तं विधायेत्थं स्वशिरस्यधिरोपयेत् ॥३६७॥
शिवोऽहमादिः सर्वज्ञो मम यज्ञे प्रधानता।

---

1 'र्घ्यं' ख.।

अत्यर्थं भावयेदेवं ज्ञानखड्गकरो गुरुः ॥३९८॥
निर्ऋतेर्दिशमासाद्य प्रक्षिपेदुदगाननः ।
अर्घाम्बु[1] पञ्चगव्यं च समन्तान्मखमण्डपे ॥३९९॥
चतुष्पथान्तसंस्कारे वीक्षणाद्यैः सुसंस्कृतम् ।
विक्षिप्य विकिरांस्तत्र कुशकूर्च्योपसंहरेत् ॥४००॥
तानीशदिशि वार्धान्या आसनायोपकल्पयेत् ।
निर्ऋतेर्वास्तुगीर्वाणान् द्वारे लक्ष्मीं प्रपूजयेत् ॥४०१॥
पश्चिमाभिमुखं कुम्भं सर्वधान्योपरिस्थितम् ।
प्रणवेन वृषारूढं सिंहस्थां वर्धनीं ततः ॥४०२॥
कुम्भे साङ्गं शिवं देवं वर्ध[2]न्यामस्त्रमर्चयेत् ।
दिक्षु शक्रादिदिक्पालान्विष्णुब्रह्मावसानकान् ॥४०३॥
वार्धानीं सम्यगादाय घटपृष्ठानुगामिनीम् ।
शिवाज्ञां श्रावयेन्मन्त्री पूर्वादीशान्तगोचरम् ॥४०४॥
अविच्छिन्न[3]पयोधारां मूलमन्त्रमुदीरयन् ।
समन्ताद्भ्रामयेदेनां रक्षार्थं शस्त्ररूपिणीम् ॥४०५॥
पूर्वं कलशमारोप्य शस्त्रालु तस्य वामतः ।
समग्रासनके कुम्भे यजेद्देवं स्थिरासने ॥४०६॥
वार्धान्यां प्रणवस्थायामायुधं तदनु द्वयोः ।
भगलिङ्गसमायोगं विदध्याल्लिङ्गमुद्रया ॥४०७॥
कुम्भे निवेश्य बोधासिं मूलमन्त्रजपं तथा ।
तद्दशांशेन वर्धन्यां रक्षां विज्ञापयेदपि ॥४०८॥

---

[1] 'अर्घ्याम्बु' ख. । [2] 'वार्धन्यां' [3] 'न्नं' क. ख. पाठः ।

गणेशं वायुदिग्भागे पूजयित्वा चतुर्भुजम्।
पद्मिनीपत्रसंकाशं सायुधं विघ्नवारणम् ॥४०६॥
पञ्चामृतादिभिर्देवं स्नापयित्वा विधानतः।
यजेत्पञ्चोपचारेण पूर्वोक्तविधिना ततः ॥४१०॥
कृत्वा कुण्डादिसंस्कारानभ्यर्च्य शिवपावकम्।
विधिवच्चरुकं दत्त्वा संपाताहुतिशोधितम् ॥४११॥
देवाग्न्यात्मविभेदेन दर्व्यान्नं विभजेत् त्रिधा।
दत्त्वा भागौ शिवाग्निभ्यां संरक्षेद्भागमात्मनि ॥४१२॥
देयं सत्क्षीरवृक्षोत्थं द्वादशाङ्गुलमायतम्।
नरेण वर्मणा वापि पूर्वतो दन्तधावनम् ॥४१३॥
दक्षिणे भस्म दातव्यं रूपिणा शिखयाथवा।
मृत्तिका पश्चिमे देया सद्योजातेन वा हृदा ॥४१४॥
उत्तरे देवदेवस्य दद्यादामलकीफलम्।
जलं वा वामदेवेन शिरसा वापि पावनम् ॥४१५॥
ऐशान्यामीशमन्त्रेण मूलमन्त्रेण वा जलम्।
सुगन्धि पञ्चगव्यं च पलाशपुटसंस्थितम् ॥४१६॥
ऐशान्यां कुसुमं दद्यादाग्नेय्यां दिशि रोचनाम्।
अगुरुं नैर्ऋताशायां वायव्यां तु चतुःसमम्? ॥४१७॥
होमद्रव्याणि सर्वाणि अजातेन कुशैः सह।
दण्डाक्षसूत्रकौपीनभिक्षापात्राणि रूपिणा ॥४१८॥
अञ्जनं कुङ्कमं तैलं शलाकां कुशशोधिनीम्।
ताम्बूलं दर्पणं दद्यादुत्तरे रोचनामपि ॥४१९॥

आसनं पादुके पात्रं योगपट्टातपत्रकम् ।
ऐशान्यामीशमन्त्रेण दद्यादीशानतुष्टये ॥४२०॥
पूर्वस्यां चरुकं सार्घं सान्नं गन्धादिकं नरे।
यदसंपन्नमेतेषां मनसा तत्प्रकल्पयेत् ॥४२१॥
पवित्राणि समादाय प्रोक्षयेदस्त्रवारिणा ।
संहितामन्त्रपूतानि नीत्वा पावकसंनिधिम् ॥४२२॥
कृष्णाजिनादिनाच्छाद्य स्मरन्संवत्सरात्मकम् ।
साक्षिणं सर्वकृत्यानां गोप्तारं शिवमव्ययम् ॥४२३॥
स्वेति-हेति-प्रयोगेण मन्त्रसंहितया पुनः ।
शोधयित्वा पवित्राणि वाराणामेकविंशतिम् ॥४२४॥
यागधामवृषस्थानप्रासादालयसंश्रयान् ।
कारकौघं च सूत्रेण वर्मणा परिवेष्टयेत् ॥४२५॥
पूजितायाथ सूर्याय दत्त्वा गन्धपवित्रकम् ।
प्रणिपत्य समाचम्य कृतन्यासः कृतार्घकः ॥४२६॥
गणादिद्वारपालेभ्यो दत्त्वा गन्धपवित्रकम् ।
प्रविश्य वास्तुनाथाय ब्रह्मणेऽपि ददीत तत् ॥४२७॥
सास्त्रेभ्यो लोकपालेभ्यः पवित्राणि स्वनामभिः ।
शिवकुम्भाय वार्धान्यै दद्याल्लम्बोदराय च ॥४२८॥
विघ्ननायकमभ्यर्च्य गुरुपादाम्बुजे ततः ।
स्वात्मानं च पवित्रेण गन्धपूर्वेण भूषयेत् ॥४२९॥
अथ सर्वौषधीलिप्तं मानोन्मानविवर्जितम् ।
धूपितं पुष्पधूपाढ्यमेकग्रन्थ्यल्पतन्तुकम् ॥४३०॥

चतुर्वर्गफलोपायमामन्त्रणपवित्रकम् ।
विधायाञ्जलिमध्यस्थमामन्त्रणपदं पठेत् ॥४३१॥
समस्तविधिकच्छिद्रपूरणेश मखं प्रति ।
प्रभो आमन्त्रयामि त्वां त्वदिच्छावाप्तिकारकः ॥४३२॥
तत्सिद्धिमनुजानीहि यजतश्चिदचित्पते ।
सर्वथा सर्वदा शम्भो नमस्तेऽस्तु प्रसीद मे ॥४३३॥

अथवा

आमन्त्रितोऽसि देवेश सह देव्या गणेश्वरैः ।
मन्त्रैश्च लोकपालैश्च सहितः परिवारकैः ॥४३४॥
निवेदयाम्यहं तुभ्यं प्रभाते तु पवित्रकम् ।
नियमं च करिष्यामि परमेश तवाज्ञया ॥४३५॥
इत्येवं देवमामन्त्र्य रेचकेनामृतीकृतम् ।
शिवान्ते मूलमुच्चार्य तच्छिवाय निवेदयेत् ॥४३६॥
जपं स्तोत्रं प्रणामं च कृत्वा शम्भुं क्षमापयेत् ।
हुत्वा मनोस्तृतीयांशं तं ददीत शिवाग्नये ॥४३७॥

ॐ पूर्वदिग्वासिभ्यो दिगीशभूतमातृगणरुद्रक्षेत्रपालादिभ्यः स्वाहा ।

इति दिङ्नामभेदेन सर्वदिक्षु बहिर्बलिम् ।
दद्यादन्ये तु वायव्यां क्षेत्रपालबलिं जगुः ॥४३८॥
समाचम्य[1] विधिच्छिद्रपूरकं होममाचरेत् ।
ततो व्याहृतिहोमं च कृत्वा रुन्धीत पावकम् ॥४३९॥

ॐ अग्नये स्वाहा, ॐ सोमाय स्वाहा, ॐ अग्नीषोमाभ्यां

[1] 'आचम्य विधिव' ख. पाठः ॥

स्वाहा. ओं अग्नये स्विष्टकृते स्वाहा।

इति दद्याद्विधानेन आहुतीनां चतुष्टयम्।
अग्निकुण्डार्चितं देवं मण्डलाभ्यर्चिते शिवे ॥४४०॥
नाडीसन्धानरूपेण विधिना योजयेत्ततः।
पूते वंशादिजे पात्रे विन्यस्यास्त्रं सकङ्कटम् ॥४४१॥
हृदयं च ततस्तत्र पवित्राण्यपि रोपयेत्।
कलाभिर्वा षडङ्गेन मन्त्रैर्वा ब्रह्मवाचकैः ॥४४२॥
अथवा मूलमन्त्रेण पवित्राण्यभिमन्त्रयेत्।
हृदयं कवचं सास्त्रं तेषामुपरि दापयेत् ॥४४३॥
इत्येवं संपुटीकृत्य पिदध्यादन्यवस्तुना।
संवेष्ट्य वर्मणा सूत्रैः पूजयित्वाङ्गशम्बरैः ॥४४४॥
रक्षार्थं जगदीशाय भक्तिनम्रः समर्पयेत्।
पूजितैः पुष्पधूपाद्यैर्दत्त्वा सिद्धान्तपुस्तके ॥४४५॥
गुरोः पादान्तिकं गत्वा भक्त्या दद्यात्पवित्रकम्।
निर्गत्य बहिराचम्य गोमये मण्डलत्रये ॥४४६॥
पञ्चगव्यं चरुं दन्तधावनं च क्रमाद्भजेत्।
आचान्तो मन्त्रसन्नद्धः कृतसंगीतजागरः ॥४४७॥
स्वपेदनुस्मरन्नीशं बुभुक्षुर्दर्भसंस्तरे।
अनेनव प्रकारेण मुमुक्षुरपि संविशेत् ॥४४८॥
केवलं भस्मशय्यायां सोपवासः समाहितः।

इति पवित्रकाधिवासविधिः॥

अथ प्रातः समुत्थाय कृतस्नानः समाहितः ॥४४९॥

कृतसन्ध्यार्चनो मन्त्री प्रविश्य मखमण्डपम् ।
समादाय पवित्राणि ह्यविसर्जितदैवतः ॥४५०॥
ऐशान्यां भाजने शुद्धे स्थापयेन्मखमण्डपे ।
ततो विसृज्य देवेशं निर्माल्यमपनीय च ॥४५१॥
पूर्ववद्भूतले शुद्धे कृत्वा नित्याह्निकद्वयम् ।
आदित्येश्वरदिक्पाले कुम्भेऽस्त्रालौ शिवानले ॥४५२॥
नैमित्तिकीं सविस्तारां कुर्यात्पूजां विशेषतः ।
मन्त्राणां तर्पणं प्रायश्चित्तहोमः शराणुना ॥४५३॥
अष्टोत्तरं शतं हुत्वा दद्यात्पूर्णाहुतिं शनैः ।
पवित्रं भानवे दत्त्वा समाचम्य ददीत तत् ॥४५४॥
द्वारपालादिदिक्पालकुम्भवार्धानिकासु च ।
संनिधाने ततः शंभोरुपविश्य निजासने ॥४५५॥
पवित्रमात्मनो दद्याद्गणाय गुरुपङ्क्तये ।
पवित्रकमथादाय किञ्चित्कलशसंमुखः ॥४५६॥
सरन्कालात्मकं देवं प्रब्रूयादिति शंकरम् ।
कालात्मना त्वया देव यद्दृष्टं मामके विधौ ॥४५७॥
कृतं क्लिष्टं समुत्कृष्टं धृतं गुप्तमसत्कृतम् ।
सर्वात्मनामुना शंभो पवित्रेण त्वदिच्छया ॥४५८॥
ओं पूरय पूरय मखव्रतं नियमेश्वराय स्वाहा ।
आत्मतत्त्वे प्रकृत्यन्ते पालिते पद्मयोनिना ।
मूलं मायान्तमुच्चार्य पवित्रेणार्चयेच्छिवम् ॥४५९॥
विद्यातत्त्वे च विद्यान्ते विष्णुकारणपालिते

१ "आदित्यद्वार" ख. पाठः।

ईश्वरान्तं तमुच्चार्य पवित्रमधिरोपयेत् । ॥४६०॥
शिवान्ते शिवतत्त्वे च रुद्रकारणपालिते ।
शिवान्तं मन्त्रमुच्चार्य तस्मै देयं पवित्रकम् ॥४६१॥
सर्वकारणपाल्येषु सर्वतत्त्वेषु सुव्रत ।
मूलं मायान्तमुच्चार्य दद्याद्गङ्गावतारकम् ॥४६२॥
आत्मविद्याशिवैः प्रोक्तं मुमुक्षूणां पवित्रकम् ।
विनिर्दिष्टं बुभुक्षूणां शिवविद्यात्मभिः क्रमात् ॥४६३॥
स्वाहान्तं वा नमोन्तं वा मन्त्रमेतमुदीरयेत् ।
आचार्यः सर्वदेवानां विदधीत पवित्रकम् ॥४६४॥

ओं हूं आत्मतत्त्वाधिपाय शिवाय स्वाहा, ओं हूं विद्यातत्त्वाधिपाय शिवाय स्वाहा, ओं हूं शिवतत्त्वाधिपाय शिवाय स्वाहा ॥

पवित्रकाणां त्रितयमिति दत्त्वा क्रमान्वितम् ।
ओं हूं सर्वतत्त्वाधिपाय शिवाय स्वाहा ॥४६५॥
इति मन्त्रं समुच्चार्य दत्त्वा गङ्गावतारकम् ।
पुष्पाञ्जलिपुटो भूत्वा भक्त्या विज्ञापयेद्विभुम् ॥४६६॥
त्वं गतिः सर्वदेवानां संस्थितस्त्वं चराचरे ।
अन्तश्चारेण भूतानां द्रष्टा त्वं परमेश्वर ॥४६७॥
कर्मणा मनसा वाचा त्वत्तो नान्या गतिर्मम ।
मन्त्रहीनं क्रियाहीनं द्रव्यहीनं च यद्गतम् ॥४६८॥
जपहोमार्चनैर्हीनं कृतं नित्यं मया तव ।

अकृतं वाक्यहीनं च तत्पूरय महेश्वर ।
सुपूतस्त्वं महेशान पवित्रं पापनाशनम् ॥४६९॥
त्वया पवित्रितं सर्वं जगत्स्थावरजङ्गमम् ।
खण्डितं यन्मया देव व्रतं वैकल्ययोगतः ॥४७०॥
एकीभवतु तत्सर्वं तवाज्ञासूत्रगुम्फितम् ।
जपं निवेद्य देवस्य भक्त्या स्तोत्रं विधाय च ॥४७१॥
प्रणम्याचलचित्तेन संतुष्टं भावयेच्छिवम् ।
चतुरश्चीनथ द्वौ वा मासं मासार्धमेव वा ॥४७२॥
सप्ताहं पञ्चरात्रं वा त्र्यहमेकाहमेव वा ।
गुरुणा वा यथोद्दिष्टं गृहीत्वा नियमं तथा ॥४७३॥
प्रणम्य क्षमयित्वेशं गत्वा कुण्डान्तिकं व्रती ।
पावकस्थे शिवेऽप्येवं पवित्राणां चतुष्टयम् ॥४७४॥
समारोप्य समभ्यर्च्य पुष्पधूपाक्षतादिभिः ।
अन्तर्बलिं पवित्रं च रुद्रादिभ्यो निवेदयेत् ॥४७५॥
प्रविश्यान्तः शिवं स्तुत्वा सप्रणामं क्षमापयेत् ।
प्रायश्चित्ते कृते होमं कृत्वा हुत्वा च पावकम् ॥४७६॥
शनैः पूर्णाहुतिं दत्त्वा वह्निस्थं विसृजेच्छिवम् ।
होमं व्याहृतिभिः कृत्वा रुन्ध्यान्निष्ठुरयानलम् ॥४७७॥
अग्न्यादिभ्यस्ततो दद्यादाहुतीनां चतुष्टयम् ।
दिक्पतिभ्यस्ततो दत्त्वा सपवित्रं बहिर्बलिम् ॥४७८॥
सिद्धान्ते पुस्तके दद्यात्सुप्रमाणं पवित्रकम् ।
ओं हां भूः स्वाहा, ओं हां भुवः स्वाहा, ओं हां स्वः॥

ाहा, ओं हां भूर्भुवःस्वः स्वाहा।
हुत्वेति व्याहृतीर्दद्याच्चतुराहुतयोऽथवा ॥४७६॥
हां अग्नये स्वाहा, ओं हां सोमाय स्वाहा, ओं हां
नये स्विष्टकृते स्वाहा।
गुरुः शव इवाभ्यर्च्यो वस्त्रवित्तविभूषणैः।
तुष्टेन गुरुणा देवि तुष्टो भवति शङ्करः ॥४८०॥
समग्रं सफलं तस्य कर्मकाण्डादि वार्षिकम्।
यस्य तुष्टो गुरुः सम्यगित्याह भगवाञ्छिवः ॥४८१॥
इत्थं गुरोः समारोप्य हृदालम्बि पवित्रकम्।
लिङ्गिनो भोजयेद्भक्त्या पूजयित्वा वदेदिति ॥४८२॥
दानेनानेन देवेशः प्रीयतां मे सदाशिवः।
प्रातः स्नानादिकं कृत्वा पवित्राण्याहरेद्विभोः ॥४८३॥
अष्टपुष्पिकया देवं पूजयित्वा विसर्जयेत्।
नित्यं नैमित्तिकं कृत्वा विस्तरेण यथा पुरा ॥४८४॥
पवित्राणि समारोप्य प्रणम्याग्नौ शिवं यजेत्।
प्रायश्चित्तं ततोऽस्त्रेण हुत्वा पूर्णाहुतिं यजेत् ॥४८५॥
भुक्तिकामोऽथ देवाय कुर्यात्कर्मसमर्पणम्।
त्वत्प्रसादेन मे कर्म फलसाधकमस्त्विति ॥४८६॥
मुक्तिकामस्तु कर्मेदं मास्तु मे नाथ बन्धकम्।
वह्निस्थं नाडियोगेन शिवं संयोजयेच्छिवे ॥४८७॥
हृदि न्यस्याणुसंघातं पावकं च विसर्जयेत्।

समाचम्य प्रविश्यान्तः कुम्भालुगतशम्बरान् ॥४८८
शिवं संपूज्य साक्षेपं क्षमस्वेति विसर्जयेत् ।
विसृज्य लोकपालादीनादायेशात्पवित्रकम् ॥४८९
सति चण्डेश्वरे जां कृत्वा दत्त्वा पवित्रकम्।
तन्निर्माल्यादिकं तस्मै सपवित्रकमर्पयेत् ॥४९०
अथवा स्थण्डिले चण्डं तीर्थे वा पूर्ववद्यजेत् ।
यत्किंचिद्वार्षिकं कर्म कृतं न्यूनाधिकं मया ॥४९१
तदस्तु परिपूर्णं मे चण्डनाथ तवाज्ञया ।
इति विज्ञाप्य देवेशं नुत्वा स्तुत्वा विसृज्य च ॥४९२
अन्धकूपेऽथवा तोये तन्निर्माल्यादिकं क्षिपेत् ।
इत्थं संतर्प्य चण्डेशं भूमिं गोमयवारिणा ॥४९३
विशोध्य शुद्धदेहस्तु स्नापयित्वा शिवं यजेत् ।
पञ्चयोजनसंस्थेऽपि पवित्रं गुरुसंनिधौ ॥४९४
कुर्वीत विधिनानेन लभते वाञ्छितं फलम् ।
अधीतशिवशास्त्रेण कृतोऽयं सोमशंभुना ॥४९५
कर्मकाण्डक्रमावल्यां पवित्रकविधिः स्फुटः ।

इति पवित्रकविधिः ॥

अथ दमनकपूजा

हरकोपात्पुरा जातो भैरवो दमनाह्वयः ॥४९६
दान्तास्तेनासुराः सर्वे दानवाश्च महाबलाः ।
प्रीतेनाथ शिवेनोक्तो विटपो[1] भव भूतले ॥४९७

[1] 'नीलबालतृणरूपः 'द्रमुन' इति भाषया ।

तां तनुं त्वमनुप्राप्य मद्भोगाय भविष्यसि ॥४६८॥
पूजयिष्यन्ति ये मर्त्या देवं त्वत्पल्लवादिभिः ।
ते यास्यन्ति परं स्थानं दमन त्वत्प्रसादतः ॥४६६॥
ये पुनर्न करिष्यन्ति दामनं [1]पर्व मानवाः ।
तेषां न चैत्रमासोत्थं दत्तं पुण्यफलं मया ॥५००॥
स्वच्छन्दभैरवे तन्त्रे यद्यपीदमुदाहृतम् ।
तथापीह समानत्वात्सिद्धान्तेऽप्युपपद्यते ॥५०१॥
सप्तम्यां वा त्रयोदश्यां गत्वा दमनकान्तिकम् ।
शोधयित्वा तमस्त्रेण पूजयेत्संहिताणुभिः ॥५०२॥
अथ संबोधयेद्दाम भववाक्येन मन्त्रवित् ।
हरप्रसादसंभूतस्त्वमत्र संनिधौ भव ॥५०३॥
शिवकार्यं समुद्दिश्य नीतव्योऽसि शिवाज्ञया ।
एवं दमनमामन्त्र्य संरक्ष्य भवनं व्रजेत् ॥५०४॥
यदि दूरं तदानीय समूलं मृत्तिकान्वितम् ।
पुनरारोप्य मृत्पूर्णे पात्रे संस्पृश्य वारिणा ॥५०५॥
गृहेऽस्यामन्त्रणं कृत्वा पूर्वोक्तविधिना ततः ।
सायाह्नसमये प्राप्ते विदध्यादधिवासनम् ॥५०६॥
आहृत्य यागवस्तूनि कृतस्नानादिसत्क्रियः ।
यथाविधि समभ्यर्च्य सूर्यशङ्करपावकान् ॥५०७॥
पश्चिमे देवदेवस्य तस्य मूलं मृदा युतम् ।
सद्योजातेन मन्त्रेण ददीत हृदयेन वा ॥५०८॥

---

मीनसंक्रान्तिदिनरूपम्' ।

वामेन शिरसा वापि नालं धात्रीं तथोत्तरे ।
दक्षिणे भस्मपात्रं च शिखया रूपिणाथवा ॥५०९॥
पुंसा वा वर्मणा प्राच्यां सपुष्पं दन्तधावनम् ।
फलमूलं च गायत्र्या ऐशान्यां गन्धसंयुतम् ॥५१०॥
पश्चाङ्गमञ्जलौ कृत्वा न्यासं पुष्पाक्षतान्वितम् ।
विज्ञापयेज्जगन्नाथं दमनारोपणं प्रति ॥५११॥
आमन्त्रितोऽसि देवेश प्रातःकाले मया प्रभो ।
कर्तव्यं तु मया शर्व पर्व पूर्वं तवाज्ञया ॥५१२॥
इति विज्ञाप्य देवस्य मस्तके कुसुमाञ्जलिम् ।
संयोज्य मूलमन्त्रेण विदधीत जपादिकम् ॥५१३॥
शेषं पात्रे विनिक्षिप्य द्वितीयेन पिधाय तत् ।
पवित्रकविधानेन कवचेनावगुण्ठयेत् ॥५१४॥
एवं संरक्षितं कृत्वा शिवाय विनिवेदयेत् ।
हविस्तदनु भुञ्जीत यदि वा पवनाशनः ॥५१५॥
शिवाग्रे जागरं कुर्याद्ध्यानगानजपादिभिः ।
प्रातः स्नात्वा जगन्नाथमष्टपुष्प्या विसर्जयेत् ॥५१६॥
नित्यां नैमित्तिकीं चैव कृत्वा पूजां विशेषतः ।
दमनैः पूजयेद्देवं पश्चाङ्गैरविखण्डितैः ॥५१७॥
शेषमञ्जलिनादाय दूर्वागन्धाक्षतान्वितम् ।
ध्यायन्नभिमुखं देवं पञ्चवक्त्रं सदाशिवम् ॥५१८॥
आत्मविद्याशिवैस्तत्त्वैर्मूलाद्यैरीश्वरान्तगैः ।
पवित्रकविधानेन क्रमेण शिवमर्चयेत् ॥५१९॥

ॐ हूँ आत्मतत्त्वेश्वराय शिवाय नमः, ॐ हूँ विद्यातत्त्वेश्वराय शिवाय नमः, ॐ हूँ शिवतत्त्वेश्वराय शिवाय नमः । अथ चतुर्थाञ्जलिमन्त्रः ॐ महेश्वराय मखं पूरय पूरय शूलपाणये नमः ।

प्रणम्य शिवमभ्यर्च्य पावकं च विधानवित् ।
विज्ञापयेच्छिवं भक्त्या वाञ्छितार्थफलप्रदम् ॥ ५२० ॥
भगवन्नतिरिक्तं वा हीनं वा यन्मया कृतम् ।
सर्वं तदस्तु संपूर्णं पर्व दामनकं मम ॥ ५२१ ॥
एवं दामविधिं कृत्वा कुर्वीत गुरुपूजनम् ।
परितोषकरं पश्चाद्द्विजातीनपि तर्पयेत् ॥ ५२२ ॥
ब्रह्मचारी गृहस्थो वा यो दामं कुरुते विधिम् ।
पूजाजपादिकं तस्य सफलं चैत्रमासजम् ॥ ५२३ ॥
हिताय शैवसिद्धान्तनिष्ठानां सोमशंभुना ।
कर्मकाण्डक्रमावल्यां दमनारोपणं कृतम् ॥ ५२४ ॥

इति दमनपूजाविधिः ॥

अथ प्रायश्चित्तविधिः

स्वकीयाचारलोपेन मानवो यात्यधोगतिम् ।
तस्योत्तितीर्षया किंचित्प्रायश्चित्तं वदेत्ततः ॥ ५२५ ॥
अत्यन्तसरुजे देहे राजचौरभयादिषु ।
गुरुदेवाग्निकार्येषु नित्यलोपो न दोषभाक् ॥ ५२६ ॥
गृहस्थो ब्रह्मचारी च प्रायश्चित्ती द्विधा भवेत् ।
सकामाकामभेदेन तावपि द्विविधौ स्मृतौ ॥ ५२७ ॥

लिङ्गं च स्थिरमुन्मूल्य स्थापयेच्च तदेवहि ।
व्यङ्गितं दग्धविच्छायं सेवितं श्वपचादिभिः ॥ ५२८ ॥
पतितं घोरगर्तादौ हृतं राजादिभिर्यदा ।
परित्यजेत्तदा लिङ्गं जप्त्वाघोरदशायुतम् ॥ ५२९ ॥
लिङ्गान्तरं प्रतिष्ठाप्य विशुद्धिमधिगच्छति ।
निर्वाणे सशिवे वह्नौ त्रिरात्रं समुपोषितः ॥ ५३० ॥
सहस्रं बहुरूपस्य जपेद्दोषापनुत्तये ।
सन्ध्यात्रयपरिभ्रष्टः शिवैकादशिकात्रयम् ॥ ५३१ ॥
जप्त्वा विशुद्धिमाप्नोति स्नानहीनः शतं जपेत् ।
पर्वण्यपूजिते देवे गुरौ वह्नौ च शक्तितः ॥ ५३२ ॥
अदत्त्वा च बलिं तत्र शिवस्याष्टशतं जपेत् ।
व्रतस्य च क्रियायाश्च नियमस्य च लोपने ॥ ५३३ ॥
गायत्र्यष्टशताभ्यासाद्विशुद्धिमधिगच्छति ।
विलोपे नित्यपूजायाश्चतुर्दश्यादिपर्वसु ॥ ५३४ ॥
निर्दिष्टं देवदेवेन प्रायश्चित्तं चतुर्गुणम् ।
आषाढ्यादित्रये[1] दैवादविधाय पवित्रकम् ॥ ५३५ ॥
लक्षद्वयमघोरस्य जप्त्वा चान्द्रायणं चरेत् ।
अथवा सन्धिते पात्रे भग्ने वापि विवर्तिते ॥ ५३६ ॥
शतद्वयात्सहस्राच्च तदर्धाच्च शुचिर्भवेत् ।
अक्षसूत्रापराधे तु शुद्धिर्लिङ्गोक्तपादतः ॥ ५३७ ॥
लिख्यतेऽथ विशेषोऽपि यो दृष्टः पारमेश्वरे ।
पवित्रके नवे छिन्ने सहस्रं परिवर्तयेत् ॥ ५३८ ॥

---

१ 'आषढादि' क. पाठः ।

शतं तु सूत्रके जीर्णे हस्तभ्रंशात्तथा शतम् ।
अक्षमालां कराद्भ्रष्टां क्षालयेद्गन्धवारिणा ॥ ५३६ ॥
गायत्र्याः शतजापेन सर्वत्रैव विधिः स्मृतः ।
घण्टायामपराधे तु लिङ्गोक्ताष्टमभागतः ॥ ५४० ॥
प्रायश्चित्तं विधातव्यं दत्तमागमवेदिना ।
पूजोपकरणं किंचित् स्पृष्ट्वा पीठादिकं पदा ॥ ५४१ ॥
शतद्वयमघोरस्य कामतस्त्वयुतं जपेत् ।
बालाबलानां वृद्धानामातुराणां च पादतः ॥ ५४२ ॥
प्रायश्चित्तं प्रदातव्यं यदि भक्तः सदा शिवे ।
शिवैकाहितचित्तानामाचार्याणां च सर्वदा ॥ ५४३ ॥
लोकसंव्यवहारार्थं प्रायश्चित्तं तु कीर्तितम् ।
केशामिषास्थिकीटादिदुष्टनैवेद्यदर्शने ॥ ५४४ ॥
अघोरस्यायुतं कामादकामात्तु शतं जपेत् ।
नित्यनैवेद्यमानस्य ह्रासेऽघोरशतद्वयम् ॥ ५४५ ॥
प्राण्यङ्गधूपदाने तु पञ्चमस्य शतं जपेत् ।
पादेनाकामतः स्पृष्ट्वा विनिन्द्य च शिवागमम् ॥ ५४६ ॥
द्व्ययुतोऽघोरमन्त्रस्य कामतः षड्गुणं जपेत् ।
महेशगुरुचण्डाज्ञाभंगे लक्षमुदीरितम् ॥ ५४७ ॥
एतदर्थार्थितद्रव्यभक्षणात्पादवर्जितम्[1] ।
निर्माल्यभक्षणेऽघोरलक्षपादेन शुध्यति ॥ ५४८ ॥
भक्षणेन समं दानं तदर्धार्धमुपेक्षणे ।

१ (द्रव्ये) क. पाठः ॥

अथवा भक्षणे कामात्प्रजपेद्ब्रह्मपञ्चकम् ॥ ५४९ ॥
यजेत्सहस्रमध्यर्धं कामतो दीक्षया शुचिः ।
निर्माल्यं लङ्घयित्वा तु दक्षिणस्यायुतं जपेत् ॥ ५५० ॥
लङ्घनेन समः स्पर्शः समौ भक्षणविक्रयौ ।
देवस्वं देवताद्रव्यं नैवेद्यं च निवेदितम् ॥ ५५१ ॥
नैवेद्यं कल्पितं तस्मै देवोच्छिष्टं निवेदितम् ।
चण्डद्रव्यं च निर्माल्यं निर्माल्यं षड्विधं स्मृतम् ॥ ५५२ ॥
ग्रामादीशस्य देवस्वं देवद्रव्यं पटादिकम् ।
चण्डद्रव्यं तु यद्दत्तं निर्माल्यं प्रेरितं बहिः ॥ ५५३ ॥
पिण्डिकास्थं च निर्माल्यमपि देवे विसर्जिते ।
क्रव्यादो जायते दानान्मातङ्गस्तस्य भक्षणात् ॥ ५५४ ॥
लङ्घनात्सिद्धिहानिश्च गन्धोपादानतो वृकः ।
चण्डालस्त्वयथादाने विक्रये शबरो भवेत् ॥ ५५५ ॥
स्पर्शने जायते स्त्रीत्वं निर्माल्यस्य न संशयः ।
यन्निर्माल्येन संस्पृष्टं तद्भुजा पुरुषेण वा ॥ ५५६ ॥
पादोनं तत्र पूर्वोक्तं स्पर्शलङ्घनभक्षणैः ।
अनुषङ्गप्रविष्टं तु चन्दनादि प्रमाणतः ॥ ५५७ ॥
तन्निर्माल्यचतुर्थांशं सिद्धलिङ्गादिधामसु ।
गुरुपुस्तकनागानां वह्नेर्योगिगणस्य च ॥ ५५८ ॥
पार्वतीयक्षमातॄणां न निर्माल्यं शिवे यथा ।
( गुरुदेवाग्निकार्येषु ) नित्यहानिर्न दोषकृत् ॥ ५५९ ॥

गृहस्थो ब्रह्मचारी वा प्रायश्चिती द्विधा भवेत् ।
सकामाकामभेदेन तावपि द्विविधौ स्मृतौ ॥ ५६० ॥
अकामात् तु सकामस्य द्विगुणां शुद्धिमादिशेत् ।
स्नातकाद् द्विगुणं ज्ञेयं प्रायश्चित्तं तु नैष्ठिके ॥ ५६१ ॥
अशीतिर्यस्य वर्षाणि बालो वाप्यूनषोडशः ।
प्रायश्चित्तार्धमर्हन्ति स्त्रियो व्याध्यादिपीडिताः ॥ ५६२ ॥
तत्रापिच परिक्लेशं ज्ञात्वा वार्धं प्रकल्पयेत् ।
सुदुष्करं स्वयं कर्तुमक्षमे द्विगुणोऽन्यतः ॥ ५६३ ॥
देशं कालं वयः शक्तिं मतिं भक्तिं क्रियाक्रमम् ।
सुविचार्य प्रदातव्यं नोपवासो रुजान्विते ॥ ५६४ ॥
प्रायश्चित्तासमर्थस्य पितृभ्रात्रादिबान्धवैः ।
तद्विभज्य विधातव्यं द्विगुणं त्वितरैर्जनैः ॥ ५६५ ॥
यथाश्रुतं यथादृष्टं निबद्धं गुरुभिर्यथा ।
स्वसिद्धान्ताविरोधेन तद्विलङ्घेन लङ्घनम् ॥ ५६६ ॥
रात्रौ पूजां च दानं च बुभुक्षुः परिवर्जयेत् ।
विना चन्द्रोपरागेण विना सिद्धिसमीहनम् ॥ ५६७ ॥
पूजयित्वा प्रमादेन गायत्र्यष्टशतं जपेत् ।
मुमुक्षोः सर्वदा सर्वा शिवपूजा न वार्यते ॥ ५६८ ॥
सकृत्सन्ध्यादिलोपे तु अजातस्य शतं जपेत् ।
त्रिकाललोपात् त्रिगुणं सोपवासं तु कामतः ॥ ५६९ ॥
एककालार्चने लुप्ते सहस्रं दक्षिणं जपेत् ।
अकामतः कामतस्तु पूर्वोक्तलक्षणं स्मरेत् ॥ ५७० ॥

एककालं द्विकालं वा त्रिकालं वार्धरात्रकम् ।
उपवाससमोपेतं कर्मलोपे कृते सति ॥ ५७१ ॥
त्रिकालं पूजनं येषामेककालमथापि वा ।
प्रायश्चित्तं समं तेषां न न्यूनं नाधिकं भवेत् ॥ ५७२ ॥
द्वितीयं दिनमारभ्य बहुरूपसहस्रकम् ।
त्रिशतोत्तरवृद्ध्या तु वर्धयेत्प्रतिवासरम् ॥ ५७३ ॥
विलोमे पक्षपूजायां जपेद्घोरायुतद्वयम् ।
द्व्ययुतोत्तरवृद्ध्या वा मासे मासे समावधि ॥ ५७४ ॥
स्वेष्टे लिङ्गे संप्रदुष्टे नष्टे दग्धे हृतेऽथवा ।
नीते वा मूषकैः काककौलेयवानरैरपि ॥ ५७५ ॥
जप्त्वा लक्षमघोरस्य विधिना लिङ्गकान्तरम् ।
प्रतिष्ठाप्य भवेच्छुद्धिः पिण्डकायां तथैव च ॥ ५७६ ॥
स्वहस्ताल्लोठिते लिङ्गे द्विगुणं परिवर्तने ।
शुद्धिः श्वभ्रच्युते लक्षात् त्रिचतुर्लुठितेऽयुतात् ॥ ५७७ ॥
गडुकाद्यभिघाते तु शुद्धिः स्यादयुतद्वयात् ।
अघोरस्यायुतेनैव लघुघाते च शुद्ध्यति ॥ ५७८ ॥
साधारे पतिते लिङ्गे ताले तारायुतं जपेत् ।
द्विगुणं तु निराधारे कल्प्यं न्यूनाधिकं ततः ॥ ५७९ ॥
अकामतो यदा लिङ्गं च्युतं पुरुषमानतः ।
विशुद्धं सर्वभावेन प्रायश्चित्तं तदा नहि ॥ ७८० ॥
अस्य तोयशलाकाया भेदे पापं महत्तमम् ।

जायते तेन कर्तव्यो न प्रमादेन कर्हिचित् ॥ ५८१ ॥
अघोरादपरो नास्ति महापापविनाशनः ।
त्रिगुणोऽतः स जप्तोऽणुर्महापापापनुत्तये ॥ ५८२ ॥
कामवस्तु यदा लिङ्गं विशीर्णं परितो भवेत् ।
प्रायश्चित्तं तदा नास्ति इति सत्यं तदा वचः ॥ ५८३ ॥
लिंङ्गे पादेन संस्पृष्टे लङ्घिते वायुतद्वयम् ।
पादलग्नरजःस्पृष्टे त्वघोरस्यायुतं जपेत् ॥ ५८४ ॥
श्लेष्मेणोपहते लिङ्गे यदिवा श्लेष्मवारिणा ।
त्र्ययुतं त्र्ययुतं वास्य क्रमेण परिवर्तयेत् ॥ ५८५ ॥
मूत्रोदकेन संस्पृष्टे जपेत्सार्धायुतद्वयम् ।
रक्तमूत्ररजःशुक्रदूषितेऽयुतपञ्चकम् ॥ ५८६ ॥
तत्संयुक्तोदकस्पर्शात्पादहीनमिदं जपेत् ।
लक्षं तु विष्टया स्पृष्टे तद्धीनं तद्वदम्भसा ॥ ५८७ ॥
तद्वन्निमाल्यगर्तेऽपि.................. ।
जप्त्वाघोरं निराहारः पञ्चगव्यं पिबेत्तदा ॥ ५८८ ॥
संकरेषु च सर्वेषु चेतसः शुद्धिकारणम् ।
अघोरमन्त्रो जप्तव्यो यावच्चित्तं प्रसीदति ॥ ५८९ ॥
अहन्यहनि योऽधीते विधितः शिवसंहिताम् ।
स हन्ति सर्वपापानि तमिस्रमिव भास्करः ॥ ५९० ॥
उपवासद्वयं कुर्यात्प्रायश्चित्तायुतेऽयुतम् ।
होमं दशांशतः कुर्याद्विंशांशं गडुकाञ्जपेत् ॥ ५९१ ॥

भूशायी ब्रह्मचारी च वितैलः सत्यवाग्भवेत् ।
नक्तं हविष्यभुग्यावत्प्रायश्चित्तं समाप्यते ॥ ५९२ ॥
मध्यपूर्वाद्युदीच्यन्तं विन्यसेत् कोष्ठपञ्चके ।
शिवं सदाशिवं विद्यां कालं च पुरुषं क्रमात् ॥ ५९३ ॥
सुप्रतिष्ठं सुशांतं च तेजोवदमृतात्मकम् ।
रत्नोदकं च पश्चात्र तद्वत्पात्राणि विन्यसेत् ॥ ५९४ ॥
गोमयं गोजलं सर्पिर्दधि क्षीरं च पञ्चमम् ।
प्रतीच्यामुत्तरे याम्ये पूर्वे मध्ये क्षिपेत्क्रमात् ॥ ५९५ ॥
सद्योजातेन वामेन रूपिणा पुरुषेण च ।
ईशेनेति यथासंख्यं गोमयमभिमन्त्रयेत् ॥ ५९६ ॥
पूर्वं पूर्वं क्षिपेदग्रे मूलमन्त्रमुदीरयन् ।
कुशोदकं तु गायत्र्या तेन संहितयाथवा ॥ ५९७ ॥
पञ्चगव्यमिति प्रोक्तं महापातकनाशनम् ।
गोमयस्यार्धमङ्गुष्ठं गोमूत्रं पलसंमितम् ॥ ५९८ ॥
पलद्वयं घृतस्योक्तं मानं दध्नः पलत्रयम् ।
पलानि पञ्च दुग्धस्य कुशाम्बु पलमात्रकम् ॥ ५९९ ॥
कृष्णाया गोमयं मूत्रं नीलायाः कापिलं घृतम् ।
सुरभेर्दधि शुक्लायास्ताम्रायाः क्षीरमाहरेत् ॥ ६०० ॥
अभावे सर्ववर्णानां कपिलैका प्रशस्यते ।
सौवर्णरौप्यपालाशं पात्रं ताम्रस्य वा शुभम् ॥ ६०१ ॥
पञ्चगव्यविधानेन शिवकूर्चमिदं स्मृतम् ।
मूलस्याष्टशतालब्धं पिबेदेकत्र योजितम् ॥ ६०२ ॥

संघातमिव तूलस्य समिधमिव पावकः ॥ ६०३ ॥
शिवकूर्चो दहत्याशु पापानि सुमहान्त्यपि ।
यथाशास्त्रोपदिष्टेन प्रायश्चित्तं वदेद्बुधः ॥ ६०४ ॥
न्यूनाधिकप्रदानेन दैशिको नरकं व्रजेत् ।
कर्मकाण्डक्रमावल्यां श्रीमता सोमशंभुना ॥ ६०५ ॥
महाप्रभावः स्वल्पोऽपि प्रायश्चित्तविधिः स्मृतः[1] ।

इति प्रायश्चित्तविधिः ॥

अथ दीक्षाविधिः

अथातो भोगमोक्षार्थं दीक्षारूपनिरूपणम् ॥ ६०६ ॥
यथागमं यथाबोधं संक्षेपादभिधीयते ।
मलमायादिपाशानां विश्लेषः क्रियते यया ॥ ६०७ ॥
ज्ञानं च जन्यते शिष्ये सा दीक्षेत्यभिधीयते ।
विज्ञानाकलनामैको द्वितीयः प्रलयाकलः ॥ ६०८ ॥
तृतीयः सकलः शास्त्रेऽनुग्राह्यस्त्रिविधः स्मृतः ।
तत्राद्यो मलमात्रेण युक्तोऽन्यो मलकर्मभिः ॥ ६०९ ॥
कलादिभूमिपर्यन्ततत्त्वैस्तु सकलो युतः ।
निराधाराऽथ साधारा दीक्षाथ द्विविधा स्मृता ॥ ६१० ॥
निराधारा द्वयोस्तेषां साधारा सकलस्य तु ।
आचार्यनिरपेक्षेण क्रियते शंभुनैव या ॥ ६११ ॥
तीव्रशक्तिनिपातेन निराधारेति सा स्मृता ।

---

१ 'कृतः' ख. पाठः ।

आचार्यमूर्तिमास्थाय मन्दतीव्रादिभेदतः ॥ ६१२ ॥
शक्त्या यां कुरुते शंभुः सा साधिकरणोच्यते ।
इयं चतुर्विधा दीक्षा सबीजा बीजवर्जिता ॥ ६१३ ॥
साधिकारा निरधिकारा यथा तदभिधीयते ।
समयाचारसंयुक्ता सबीजा जायते नृणाम् ॥ ६१४ ॥
निर्बीजा त्वसमर्थस्य समयाचारवर्जिता ।
नित्ये नैमित्तिके काम्ये यदि स्यादधिकारिता ॥ ६१५ ॥
साधिकारा भवेद्दीक्षा साधकाचार्ययोरतः ।
निर्बीजदीक्षितानां तु तथा समयिपुत्रयोः ॥ ६१६ ॥
नित्यमात्राधिकारित्वाद्दीक्षा निरधिकारिका ।
द्विविधेयं द्विरूपापि प्रत्येकमुपजायते ॥ ६१७ ॥
एका क्रियावती तत्र कुण्डमण्डलपूर्विका ।
मनोव्यापाररूपेण या सा ज्ञानवती मता ॥ ६१८ ॥
इत्थं लब्धाधिकारेण दीक्षाचार्येण साध्यते ।
स च सद्देशसंभूतः सुमूर्तिः श्रुतशीलवान् ॥ ६१९ ॥
ज्ञानाचारो गुणोपेतः क्षमी शुद्धाशयो वरः ।
देशकालगुणाचारो गुरुभक्तिसमन्वितः ॥ ६२० ॥
शिवानुध्यानवान् शस्तो विरक्तश्च प्रशस्यते ।
अथ दीक्षां गुरुः कुर्यात्कृतनित्यक्रियाक्रमः ॥ ६२१ ॥
प्रणवार्घकराम्भोजः कृतद्वाराधियार्चनः ।
विघ्नानुत्सार्य देहल्यां न्यस्यास्त्रं स्वासने स्थितः ॥ ६२२ ॥
कुर्वीत भूतसंशुद्धिमन्तर्यागं यथोदितम् ।

तिलतण्डुलसिद्धार्थकुशदूर्वाङ्कुरोदरम् ॥ ६२३ ॥
सयवक्षीरनीरं च विशेषार्घमिमं ततः ।
तदम्बुना द्रव्यशुद्धिं तिलकं स्वाणुनात्मनः ॥ ६२४ ॥
पूजनं मन्त्रसंशुद्धिं पञ्चगव्यं च पूर्ववत् ।
लाजाचन्दनसिद्धार्थान् भस्मदूर्वाक्षतान्कुशान् ॥ ६२५ ॥
विकिरान् शुद्धलाजान्तान्सप्तधास्त्राभिमन्त्रितान् ।
अस्त्राम्बुप्रोक्षितानेतान्कवचेनावगुण्ठितान् ॥ ६२६ ॥
नानाप्रहरणाकारान्विघ्नौघविनिवारकान् ।
दर्भाणां तालमानेन कृत्वा षट्त्रिंशता दलैः ॥ ६२७ ॥
सप्तजप्तशिवास्त्रेण वेणीबोधासिमुत्तमम् ।
शिवमात्मनि विन्यस्य स्मृत्वा ध्यानमभीप्सितम् ॥ ६२८ ॥
निष्कलं च शिवं न्यस्य शिवोऽहमिति भावयेत् ।
मूलाभिमन्त्रितं श्वेतमुष्णीषं शिरसि न्यसेत् ॥ ६२९ ॥
अलङ्कुर्यान्निजं देहं गन्धैः पुष्पैर्विभूषणैः ।
गन्धमण्डलकं स्वीये विदध्याद्दक्षिणे करे ॥ ६३० ॥
विधिनात्रार्चयेदीशमित्थं स्याच्छिवहस्तकम् ।
तं न्यस्य शिवमन्त्रेण भास्वरं निजमस्तके ॥ ६३१ ॥
शिवादभिन्नमात्मानं कर्तारं भावयेद्यदा ।
मण्डले कर्मणां साक्षी कलशे यज्ञरक्षकः ॥ ६३२ ॥
होमाधिकरणं वह्नौ शिष्ये पाशविमोचकः ।
स्वात्मन्यनुग्रहीतेति पञ्चाकारोऽयमीश्वरः ॥ ६३३ ॥
सोऽहमेवेति कुर्वीत भावं स्थिरतरं गुरुः ।

ज्ञानखड्गकरः स्थित्वा नैर्ऋत्यामुदगाननः ॥६३४॥
अर्घाम्बुपञ्चगव्याभ्यां संप्रोक्ष्य मखमण्डलम् ।
चतुष्पथान्तसंस्कारैः संस्कुर्याद्वीक्षणादिभिः ॥ ६३५ ॥
विक्षिप्य विकिरांस्तत्र कुशकूर्चेर्योपसंहरेत् ।
तानीशदिशि वार्धान्यामासनायोपकल्पयेत् ॥ ६३६ ॥
नैर्ऋते वास्तुगीर्वाणान्द्वारे लक्ष्मीं च पूजयेत् ।
पश्चिमे संमुखीं रत्नैः पूरयन्तीं मखालयम् ॥ ६३७ ॥
ध्यात्वावाह्य हृदाभ्यर्च्य स्मरन्मण्डलरूपिणीम् ।
अथ रत्नौषधीतोयपूर्णे चन्दनचर्चिते ॥ ६३८ ॥
चूतपल्लववक्त्रे च प्रणवेन चलासने ।
ऐशान्यां सर्वदा न्यस्ते कलशे पश्चिमानने ॥ ६३९ ॥
भूषिते वस्त्रहेमाद्यैः साङ्गं संपूज्य शङ्करम् ।
कुम्भदक्षिणपार्श्वस्थां पश्चिमास्यां सुलक्षणाम् ॥ ६४० ॥
पूजयेदथ सिंहस्थां वार्धानीं खड्गरूपिणीम् ।
दिक्षु शक्रादिदिक्पालान्विष्णवन्तान्प्रणवासनान् ॥ ६४१ ॥
वाहनायुधसंयुक्तान्हृदाभ्यर्च्य स्वनामभिः ।
प्रथमं तां समाधाय कुम्भस्याग्राभिगामिनीम् ॥ ६४२ ॥
अविच्छिन्नपयोधारां भ्रामयेत्तां प्रदक्षिणम् ।
शिवाज्ञां लोकपालानां श्रावयेन्मूलमुच्चरन् ॥ ६४३ ॥
संरक्ष्य तु यथाभागं कुम्भं धृत्वा च तां न्यसेत् ।
ततः स्थिरासने कुम्भे साङ्गं संपूज्य शङ्करम् ॥ ६४४ ॥
विन्यस्य शोध्यमध्वानं वार्धान्यां चास्त्रमुच्चरेत् ।

ॐह्रः अस्त्रासनाय हूंफट् नमः । ॐॐ अस्त्रमूर्तये हूंफट् नमः । ॐश्लीं पशु हूंफट् अस्त्रासनाय हूंफट् नमः । ॐॐ हृदयाय हूं फट् नमः । ॐश्लीं शिरसे हूँफट् नमः । ॐ पं शिखायै हूंफट् नमः । ॐ शुं कवचाय हूंफट् नमः । ॐ हूंफट् अस्त्राय हूंफट् नमः ॥

सूर्यकोटिप्रतीकाशं प्रलयाम्बुदनिःस्वनम् ॥ ६४५ ॥
त्र्यक्षं नागोपवीतं च चतुर्वक्त्रं चतुर्भुजम् ।
प्रदीप्तदशनप्रान्तं दीप्तभ्रूश्मश्रुमूर्धजम् ॥ ६४६ ॥
शक्तिमुद्गरशूलासिहस्तं चन्द्रार्धशेखरम् ।
भगलिङ्गसमायोगं विदध्याल्लिङ्गमुद्रया ॥ ६४७ ॥
अङ्गुष्ठेन स्पृशेत्कुम्भं हृदा मुष्ट्या तु वार्धनीम् ।
भुक्तये मुक्तये त्वादौ मुष्टिना वार्धनीं स्पृशेत् ॥ ६४८ ॥
कुम्भस्य मुखरक्षार्थं ज्ञानखड्गं समर्पयेत् ।
साष्टं च मूलमन्त्रस्य शतं कुम्भे निवेदयेत् ॥ ६४९ ॥
तद्दशांशेन वार्धान्यां रक्षां विज्ञापयेदपि ।
यथेदं कृतयत्नेन भगवन्मखमन्दिरम् ॥ ६५० ॥
रक्षणीयं जगन्नाथ सर्वाध्वरवर त्वया ।
प्रणवस्थं चतुर्बाहुं वायव्ये विघ्ननायकम् ॥ ६५१ ॥
संपूज्य पूजयेन्मध्ये गन्धाम्बुकृतमण्डले ।
स्थण्डिलेशं सविस्तारं पूर्वोक्तविधिना ततः ॥ ६५२ ॥
लब्धानुज्ञो व्रजेत्सार्घः कुण्डान्तं मन्त्रतृप्तये ।
निविष्टो विधिना तस्मिन्नर्घगन्धघृतादिकम् ॥ ६५३ ॥
वामे मध्ये तु विन्यस्य समिद्दर्भतिलादिकम् ।

कुण्डवह्निस्रगाज्यादि प्राग्वत्संस्कृत्य भावयेत् ॥ ६५४ ॥
मुख्यतामूर्ध्ववक्त्रस्य हृदि वह्नौ शिवं यजेत् ।
स्वमूर्तौ शिवकुम्भे च मण्डले चाग्निशिष्ययोः ॥ ६५५ ॥
सृष्टिन्यासेन विन्यस्य शोध्याध्वानं यथाविधि ।
वक्त्राणामग्निजिह्वानां ज्वालानां च निरूपणम् ॥ ६५६ ॥
इष्टं काम्यविधानेषु प्रसङ्गादभिधीयते ।
कुण्डमानं मुखं ध्यात्वा हृदाहुतिभिरीप्सितम् ॥ ६५७ ॥
पश्चिमे शिष्यसंस्कारनित्यहोमौ समाचरेत् ।
वश्याकर्षणसौभाग्ये पुष्टिभाग्याधिरोहणे ॥ ६५८ ॥
शान्तिके पाशशुद्धौ च वामे होमः प्रशस्यते ।
गुटिकाञ्जननिस्त्रिंशपादलेपजिगीषया ॥ ६५९ ॥
शिष्यसंयोजनार्थं च प्राचीनवदने यजेत् ।
मारणोच्चाटनद्वेषस्तम्भनार्थं च दक्षिणे ॥ ६६० ॥
प्रायश्चित्तं तु तत्रैव पश्चिमे तु विमुक्तये ।
हिरण्या कनका रक्ता कृष्णा तदनु सुप्रभा ॥ ६६१ ॥
जिह्वाग्नेरतिरक्ता च बहुरूपा तु सप्तमी ।
रुद्रेन्द्रवह्निमांसादवरुणानिलगोचरे ॥ ६६२ ॥
हिरण्याद्या विनिर्दिष्टा रसनाः षडनुक्रमात् ।
मध्यतो बहुरूपा च दक्षिणोत्तरगामिनी ॥ ६६३ ॥
हिरण्या तप्तहेमाभा कनका वज्रसुप्रभा ।
रक्तोदितारुणप्रख्या कृष्णा नीलमणिप्रभा ॥ ६६४ ॥
सुप्रभा मौक्तिकद्योतातिरक्ता पद्मरागवत् ।

चन्द्रकांतशरच्चन्द्रप्रभेव बहुरूपिणी ॥ ६६५ ॥
फलं तु कामभेदेन क्रमादासामुदीर्यते ।
वश्याकर्षणयोराद्या कनका स्तम्भने रिपोः ॥ ६६६ ॥
विद्वेषमोहने रक्ता कृष्णा मारणकर्मणि ।
सुप्रभा शान्तिके पुष्टौ सुरक्तोच्चाटने मता ॥ ६६७ ॥
एकैव बहुरूपा तु सर्वकामफलप्रदा ।
अभीष्टवदने तासां जिह्वानामनुपूर्वशः ॥ ६६८ ॥
बीजानि सप्त होमार्थं लिख्यन्ते तासु तद्यथा ।
विरेफावन्तिमौ वर्गौ रेफषष्ठस्वरस्थितौ ॥ ६६९ ॥
इन्दुबिन्दुशिखायुक्तौ जिह्वाबीजान्यनुक्रमात् ।

ॐ यरँ हिरण्यायै नमः। लरँ कनकायै नमः। व्रँ रक्तायै नमः। श्रँ कृष्णायै नमः। षरँ सुप्रभायै नमः। स्रँ अतिरक्तायै नमः। ह्रँ बहुरूपायै नमः॥

क्षीरादिमधुरैर्होमं कुर्याच्छान्तिकपौष्टिके ॥ ६७० ॥
अभिचारे तु पिण्याकसक्तुकम्बुकक्राञ्जिकैः ।
लवणै राजिकातक्रकटुतैलैश्च कण्टकैः ॥ ६७१ ॥
समिद्भिरपि वक्राभिः क्रुद्धो भाष्याणुना यजेत् ।
विद्याधरत्वलाभाय चन्द्रागुरुयुतं पुरम् ॥ ६७२ ॥
अथवा पद्मकिञ्जल्कैर्जुहुयात्साधकोत्तमः ।
कदम्बकलिकाहोमाद्यक्षिणी सिध्यति ध्रुवम् ॥ ६७३ ॥
बन्धूककिंशुकादीनि वश्याकर्षाय होमयेत् ।
बिल्वं राज्याय लक्ष्म्यर्थं पाटलांश्चम्पकानपि । ॥ ६७४ ॥

पद्मानि चक्रवर्तित्वे भक्ष्यभोज्यादिसंपदे ।
दूर्वा व्याधिविनाशाय सर्वसत्त्ववशीकृतौ ॥ ६७५ ॥
प्रियङ्गुकदलीपुष्पाण्याहृतो जुहुयाद्बुधः ।
विषमज्वरनाशाय चूतपत्राणि होमयेत् ॥ ६७६ ॥
घृतेन सह सार्द्राणि घृतप्लुतानि ज्वारिणः ।
ॐ अमुकस्य ज्वरं नाशय जुंसः वौषट् ।
जले वरुणमभ्यर्च्य वृष्टयर्थं ग्रहसंयुतम् ॥ ६७७ ॥
तिलान्वारुणमन्त्रेण जुहुयाद्गुह्यकेन वा ।
मेघानाप्लाविताशेषदिगन्तधरणीतलान् ॥ ६७८ ॥
धारयेत्तिलहोमेन शीघ्रं पाशुपताणुना ।
ॐ श्लीं पशु हूंफट् मेघान्स्फुटीक्रियतां हूंफट ।
सर्वोपद्रवनाशाय रुद्रशान्त्या तिलादिभिः ॥ ६७९ ॥
विधिना यजनं कुर्यादथ प्रस्तुतमुच्यते ।
आहुत्यष्टशतेनैवमङ्गानि तु दशांशतः ॥ ६८० ॥
संतर्प्य प्लुतमूलेन दद्यात्पूर्णां यथा पुरा ।
तथा शिष्यप्रवेशाय प्रतिशिष्यं शतं यजेत् ॥ ६८१ ॥
शतद्वयं च होतव्यं संपत्तौ देशकालयोः ।
दुर्निमित्तापसाराय सुनिमित्तकृते तथा ॥ ६८२ ॥
शतद्वयं च होतव्यं मूलमन्त्रेण पूर्ववत् ।
मूलाद्यस्त्रान्तमन्त्राणां स्वाहान्तैस्तर्पणं महत् ॥ ६८३ ॥
शिखासंपुटितैर्बीजैः हूंफडन्तैश्च दीपनम् ।

ॐ हूं शिवाय स्वाहेति तर्पणम् । ॐ ॐ शिवाय हूं फडित्यादि दीपनम् ॥

ततः शिवाम्भसा स्थालीं क्षालितां वर्मगुण्ठिताम् ॥६८४॥
चन्दनादिसमालब्धां बध्नीयात्कण्ठमण्डले ।
वस्त्रास्त्रजप्तसद्दर्भसूत्राभ्यां चरुसिद्धये ॥ ६८५ ॥
धर्माद्यैरासने दत्ते सान्द्रास्त्रकृतमण्डले ।
न्यस्तास्त्रमूर्तिभूतायां भावपुष्पैः शिवं यजेत् ॥ ६८६ ।
वस्त्रबद्धमुखायां वा स्थाल्यां पुष्पैर्बहिर्भवेत् (यजेत्) ॥
चुल्ल्यां पश्चिमवक्त्रायां शुद्धायां वीक्षणादिभिः ॥ ६८७ ॥
न्यस्तहुंङ्कारबीजायां न्यस्तायां कुण्डदक्षिणे ।
धर्माधर्मशरीरायां जप्तायामायुधाणुना ॥ ६८८ ॥
स्थालीमारोपयेदस्त्रजप्तगव्याज्यमार्जिताम् ।
गव्यं पयोऽस्त्रसंशुद्धं प्रासादशतमन्त्रितम् ॥ ६८९ ॥
तण्डुलान् श्यामकादीनां निक्षिपेत्तत्र तद्यथा ।
एका शिष्यविधानाय तेषां प्रसृतिपञ्चकम् ॥ ६९० ॥
प्रसृतिं प्रसृतिं पश्चाद्वर्धयेद्वृद्धयनुक्रमात् ।
कुर्वंश्चालनमस्त्रेण पिधानं कवचाणुना ॥ ६९१ ॥
शिवाग्नौ मूलमन्त्रेण पूर्वास्यश्चरुकं पचेत् ।
सुस्विन्ने तत्र तच्चुल्ल्यां स्रुवमापूर्य सर्पिषा ॥ ६९२ ॥
स्वाहान्तैः संहितामन्त्रैर्दत्त्वा तप्ताभिघारकम् ।
संस्थाप्य मण्डले स्थालीं सदर्भेऽस्त्राणुना कृते ॥ ६९३ ॥

---

१ 'फट्कार' ख. पाठः ।

प्रणवेन विधायास्या उल्लेखं लेपनं हृदा ।
सुशीतला भवेदेवं प्राग्वच्छीताभिघारणम् ॥ ६६४ ॥
विदध्यात्संहितामन्त्रैर्वौषडन्तैः सकृत्सकृत् ।
दर्भाद्यासनके दत्त्वा कुण्डमण्डपपश्चिमे ॥ ६६५ ॥
संपातं च ध्रुवा धन्व ? तद्वत्संहितया चरेत् ।
चरुकं सकृदालभ्य तयैव वषडन्तया ॥ ६६६ ॥
धेनुमुद्रामृतीभूतं स्थण्डिले शान्तिकं यजेत् ।
साज्यं भागं स्वशिष्याणां भागं देवाय वह्नये ॥ ६६७ ॥
कुर्यात् तं लोकपालेभ्यः समानाज्यमिदं त्रयम् ।
नमोऽन्तेन हृदा दद्यात् तेनैवाचमनीयकम् ॥ ६६८ ॥
मूलं साष्टशतं हुत्वा दद्यात्पूर्णां यथाविधि ।
मण्डले कुण्डतः पूर्वे मध्ये वा शंभुकुण्डयोः ॥ ६६९ ॥
तत्र मातृगणादीनां निर्ऋत्यान्तर्बलिं हृदा ।
शिवमध्यस्य लब्धाज्ञो विधायैकत्वभावनाम् ॥ ७०० ॥
सर्वज्ञानादियुक्तोऽहं समस्ताध्वोपरिस्थितः ।
समांशं[1] योजनस्थानमधिष्ठाताहमध्वरे ॥ ७०१ ॥
शिवोऽहमित्यहङ्कारी निष्क्रमेद्यागमण्डपात् ।
न्यस्तपर्वाग्रसंदर्भे शस्त्राणुकृतमण्डले ॥ ७०२ ॥
प्रणवासनके शिष्यं शुक्लवस्त्रोत्तरीयकम् ।
स्नातं चोदङ्मुखं मुक्त्यै पूर्वास्यं चैव भुक्तये ॥ ७०३ ॥
ऊर्ध्वकायं समारोप्य पूर्वास्यः प्रविलोकयेत् ।

---

१ 'समांशे ख. पाठः ।

चरणादिशिखां यावद्भुक्त्यै मुक्त्यै विलोमतः ॥ ७०४ ॥
चक्षुषा सप्रसादेन शैवं धाम विवृण्वता ।
अस्त्रोदकेन संप्रोक्ष्य मन्त्राम्बुस्नानसिद्धये ॥ ७०५ ॥
भस्मस्नानं तु विघ्नानां शान्तये पापभीतये ।
सृष्टिसंहारयोगेन ताडयेदस्त्रभस्मना ॥ ७०६ ॥
पुनरस्त्राम्बुना प्रोक्ष्य सकलीकरणाय तम् ।
नाभेरूर्ध्वं कुशाग्रेण मार्जनायास्त्रमुच्चरन् ॥ ७०७ ॥
हृदालभेत तन्मूलैरघमर्षाय नाभ्यधः ।
द्वैविध्याय च पाशानामालभ्येत शराणुना ॥ ७०८ ॥
तच्छरीरे शिवं साङ्गं सासनं विन्यसेत्ततः ।
पुष्पादिपूजितस्यास्य नेत्रे नेत्रेण वा हृदा ॥ ७०९ ॥
बद्ध्वा मन्त्रितवस्त्रेण सितवस्त्रदशेन[1] च ।
प्रदक्षिणक्रमादेव प्रविश्य शिवदक्षिणे ॥ ७१० ॥
षडुत्थमासनं दत्त्वा यथावत् तं[2] निवेशयेत् ।
संहारमुद्रयात्मानं[3] मूर्त्या तस्य हृदम्बुजे ॥ ७११ ॥
निरुध्य शोधिते काये न्यासं कृत्वा तमर्चयेत् ।
पूर्वाननस्य शिष्यस्य मूलमन्त्रेण मस्तके ॥ ७१२ ॥
शिवहस्तं प्रदातव्यं रुद्रेशपददायकम् ।
शिवसेवाग्रहोपायं दत्तं हस्ते शिवाणुना ॥ ७१३ ॥
शिवे प्रक्षेपयेत् पुष्पमपनीयास्य चाम्बरम् ।
उत्पाद्य स्थानमन्त्राद्यं शिवदेवगणाङ्कितम् ॥ ७१४॥

---

१ 'सितेन सदशेन च' ख. ग. पाठः । २ 'तु' क. पाठः ।
३ 'त्मनि' क. पाठः ।

विप्रादीनां क्रमान्नाम कुर्याद्वा स्वेच्छया गुरुः ।
प्रणतिं कुम्भवार्धान्योः कारयित्वानलान्तिके ॥ ७१५ ॥
स्वदक्षिणासने तद्वत्सौम्यास्यमुपवेशयेत् ।
शिष्यदेहविनिष्क्रान्तां सुषुम्नामपि भावयेत् ॥ ७१६ ॥
निजविग्रहलीनां च दर्भं मूलेन मन्त्रितम् ।
दर्भाग्रं दक्षिणे तस्य निधाय करपल्लवे ॥ ७१७ ॥
तन्मूलमात्मजङ्घायामग्रं वेति मतान्तरम् ।
शिष्यस्य हृदयं गत्वा रेचकेन शिवाणुना ॥ ७१८ ॥
पूरकेण समागत्य स्वकीयं हृदयाम्बरम्
शिवाग्निना पुनः कृत्वा नाडीसन्धानमीदृशम् ॥ ७१९ ॥
हृदा तत्संनिधानार्थं जुहुयादाहुतित्रयम् ।
शिवहस्तस्थिरत्वार्थं शतं मूलेन होमयेत् ॥ ७२० ॥
इत्थं समयदीक्षार्थं भवेद्योग्यो भवार्चने ।
इति दीक्षाविधिः ॥

अथ समयदीक्षाविधानम्

अथ संस्कार(समय)दीक्षायां विधानमभिधीयते ॥ ७२१ ॥
आवाहयेन्महेशस्य वह्निस्थस्य शिवौ हृदि ।
संश्लिष्टौ तौ समभ्यर्च्य संतर्प्य हृदयाणुना ॥ ७२२ ॥
तयोः संनिधये दद्यात् तेनैवाहुतिपञ्चकम् ।
कुसुमेनास्त्रजप्तेन ताडयेद्धृदये शिशुम् ॥ ७२३ ॥
प्रस्फुरत्तारकाकारं चैतन्यं तत्र भावयेत् ।
प्रविश्य तत्र हुङ्कारयुक्तरेचकयोगतः ॥ ७२४ ॥

संहारिण्या तदाकृष्य ध्रुवेण स्वहृदि न्यसेत् ।
ततो वागीश्वरीयोनौ मुद्रयोद्भवसंज्ञया ॥ ७२५ ॥
हृत्संपुटात्ममन्त्रेण रेचकेन विनिक्षिपेत् ।
ॐ हां हां हां आत्मने नमः ॥
जाज्वल्यमाने निर्धूमे जुहुयादिष्टसिद्धये ॥ ७२६ ॥
अप्रबुद्धे सधूमे तु होता वह्नौ न सिध्यति ।
स्निग्धः प्रदक्षिणावर्तः सुगन्धः शस्यतेऽनलः ॥ ७२७ ॥
विपरीतः स्फुलिङ्गो च भूमिदृङ् न प्रशस्यते ।
अन्तेवासिकृतं पापं जानीयादग्निलक्षणैः ॥ ७२८ ॥
विष्टागन्धे स भूहर्ता ब्रह्महा गुरुतल्पगः ।
सुरापो गुरुहन्ता च गोघ्नश्च कृतनाशनः ॥ ७२९ ॥
कृशेऽग्नौ शवगन्धे च गर्भभर्तृविनाशनः ।
भ्रमति स्त्रीवधे वह्निः कम्पते हेमहर्तरि ॥ ७३० ॥
वधे स्फुटति बालस्य निस्तेजा गर्भघातके ।
इत्येवमादिभिश्चिह्नैर्हुत्वा शिष्यस्य कल्मषम् ॥ ७३१ ॥
पापभक्षणहोमेन दहेद्वा तं नवात्मना ।
द्विजत्वापादने चैव तथा रुद्रांशभावने ॥ ७३२ ॥
आहारबीजसंशुद्धौ गर्भाधानाय संस्कृतौ ।
सीमन्तजन्मने नामकरणाय च होमयेत् ॥ ७३३ ॥
शतानि पञ्च मूलेन चूडादिषु दशांशतः ।
शिथिलीभूतबन्धस्य शक्तेरुत्कर्षणं च यत् ॥ ७३४ ॥

---

१ अत्र अग्नेः समिन्धनमेव प्रबोधो, नतु अन्यत् तेनाप्रबुद्धेऽसमिद्ध इत्यर्थः

आत्मनो रुद्रपुत्रत्वे गर्भाधानं तदुच्यते ।
स्वातन्त्र्यात्मगुणव्यक्तिरिह पुंसवनं स्मृतम् ॥ ७३५ ॥
मायात्मनोर्विवेकेन ज्ञानं सीमन्तवर्धनम् ।
शिवादिशुद्धसद्वस्तुस्वीकारो जननं मतम् ॥ ७३६ ॥
बोधनं यच्छिवत्वेन शिवत्वार्हस्य नाम तत् ।
संहारमुद्रयात्मानं स्फुरद्वह्निकणोपमम् ॥ ७३७ ॥
निदधीत समादाय निजे हृदयपङ्कजे ।
ततः कुम्भकयोगेन मूलमन्त्रमुदीरयन् ॥ ७३८ ॥
कुर्यात्समरसीभावं तदात्मशिवयोर्हृदि ।
ब्रह्मादिकारणत्यागक्रमाद्रेचकयोगतः ॥ ७३९ ॥
नीत्वा शिवान्तमात्मानमादायोद्भवमुद्रया ।
हृत्संपुटितमन्त्रेण रेचकेन विधानवित् ॥ ७४० ॥
शिष्यस्य हृदयाम्भोजकर्णिकायां विचिन्तयेत् ।
पूजां शिवस्य वह्नेश्च कारयित्वा यथोदिताम् ॥ ७४१ ॥
प्रणतिं कारयेच्छिष्यं समयान् श्रावयेद्यथा ।
न निन्देत्कारणं देवं न शास्त्रं तेन भाषितम् ॥ ७४२ ॥
न गुरुं साधकं चैव लिङ्गच्छायां न लङ्घयेत् ।
माद्यान्न लङ्घयेन्निर्माल्यं तदद्याच्छिवदीक्षितः ॥ ७४३ ॥
तत् शिवनिर्माल्यं शिवदीक्षित एव अद्यात् भक्षयेत्, नतु अन्य इत्यर्थः ॥
शिवाग्निगुरुपूजा च कर्तव्या जीविताबधि ।
बालबालिशवृद्धस्त्रीभोगरुग्व्याधितात्मनाम् ॥ ७४४ ॥

यथाशक्ति ददीतैतान्समर्थस्य समर्थकान् ।
व्रताङ्गानि जटाभस्मदण्डकौपीनसंयमान् ॥ ७४५ ॥
ईशानाद्यैर्हृदाद्यैर्वा परिजप्य यथाक्रमम् ।
स्वाहान्तसंहितामन्त्रैः पात्रेष्वारोप्य पूर्ववत् ॥ ७४६ ॥
संपाताभिहतान्कृत्वा स्थण्डिलेशाय दर्शयेत् ।
रक्षणार्थं घटाधस्तादारोप्य क्षणमात्रकम् ॥ ७४७ ॥
शिवादाज्ञां समादाय ददीत व्रतिने गुरुः ।
एवं समयदीक्षायां विशिष्टायां विशेषतः ॥ ७४८ ॥
वह्निहोमागमज्ञानैर्योग्यः संजायते शिशुः ।
नाडीसंधानहोमस्तु मन्त्राणां तर्पणं तथा ॥ ७४९ ॥
पूर्वजातेः समुद्धारो द्विजत्वापादनं तथा ।
चैतन्यस्यापि संस्कारो रुद्रांशापादनं तथा ॥ ७५० ॥
दत्त्वा पवित्रकं होमशतं वाथ सहस्रकम् ।
दीक्षैषा सामयी प्रोक्ता रुद्रेशपददायिनी ॥ ७५१ ॥
इति समयदीक्षाविधिः ॥

अथ निर्वाणदीक्षा

अथ निर्वाणदीक्षायां कुर्यान्मूलादिदीपनम् ।
पाशबन्धनशक्त्यर्थं ताडनादिकृतेऽपि च ॥ ७५२ ॥
एकैकया तदाहुत्या प्रत्येकेन त्रयेण वा ।
बीजगर्भशिखाबन्धहूंफडन्तध्रुवाणुना ॥ ७५३ ॥
ओं हूंहूंहूं फट् मूलस्य, ओं हूंहूंहूं फट् हृदयस्य, एवं शिरःप्रभृतीनामपि ॥

इत्येवं दीपनं कुर्यात् सर्वस्मिन् क्रूरकर्मणि ।
शान्तिके पौष्टिके वश्ये वषडन्तादिनाणुना ॥ ७५४ ॥
वषड्वौषट्समोपेतैर्नवार्णस्योपरिस्थितैः ।
हवनं शम्बरैः कुर्यात्सर्वत्राप्यायनादिषु ॥ ७५५ ॥
ततः स्वसव्यभागस्थं मण्डलन्यस्तविग्रहम् ।
शिष्यं संपूज्य सत्सूत्रं सुषुम्नेति विभावयेत् ॥ ७५६ ॥
मूलेन तच्छिखाबन्धं पादाङ्गुष्ठान्तमानयेत् ।
संहारेण मुमुक्षोस्तु बध्नीयात् तच्छिखान्तिके ॥ ७५७ ॥
पुंसस्तु दक्षिणे भागे वामे नार्या नियोजयेत् ।
शक्तिं च शक्तिमन्त्रेण पूजितां तस्य मस्तके ॥ ७५८ ॥
संहारमुद्रयादाय सूत्रे तेनैव योजयेत् ।
नाडीमादाय मूलेन सूत्रे न्यस्य हृदार्चयेत् ॥ ७५९ ॥
अवगुण्ठ्य तनुत्रेण हृदयेनाहुतित्रयम् ।
दद्यात्तत्संनिधानार्थं शक्तावप्येवमेव हि ॥ ७६० ॥

ततः ॐ हां तत्त्वाध्वने नमः । ॐ हां पदाध्वने नमः । ॐ हां वर्णाध्वने नमः । ॐ हां मन्त्राध्वने नमः । ॐ हां कलाध्वने नमः । ॐ हां भुवनाध्वने नमः ॥

इति षड्विधमध्वानं सूत्रे न्यस्यास्त्रवारिणा ।
शिष्यं प्रोक्ष्यास्त्रजप्तेन पुष्पेण हृदि ताडयेत् ॥ ७६१ ॥
प्रविश्य तत्र हूंकारयुक्तरेचकयोगतः । ।
चैतन्यं हंसबीजस्थं विश्लेष्य चायुधाणुना ॥ ७६२ ॥
ॐहःहूंफट्शक्तिसूत्रेण हां हां स्वाहेति चाणुना ।

ओंहः हूंफट् शक्तिसूत्रेण हांहांस्वाहेति चाणुना ॥७६४॥
संहारमुद्रया सूत्रे नाडीभूते नियोजयेत् ।
ओं हां हां हां आत्मने नमः ।
व्यापयेद्भावयेदेकं तन्तुत्रेणावगुण्ठयेत् ॥ ७६५ ॥
आहुतित्रितयं दद्याद्धृदि संनिधिहेतवे ।
विद्यादेहं च विन्यस्य शान्त्यतीतावलोकनम् ॥ ७६६ ॥
तस्यामितरतत्त्वाढ्यमन्तर्भूतं विचिन्तयेत् ।
ओं हूं शान्त्यतीताकलापाशाय नमः इत्यनेन अवलोक्य
द्वे तत्त्वे मन्त्रमप्येकं पदं वर्णाश्च षोडश ॥ ७६७॥
तथाष्टौ भुवनान्यस्यां बीजनाडीकखद्वयम् ।
विषयं च गुणं चैकं कारणं च सदाशिवम् ॥ ७६८ ॥
सितायां शान्त्यतीतायामन्तर्भाव्य प्रताडयेत् ।
ओं हूं शान्त्यतीताकलापाशाय हूं फट् ।
संहारमुद्रयादाय निदध्यात् सूत्रमस्तके ॥ ७६९ ॥
पूजयेदाहुतीस्तिस्रो दद्यात्संनिधिहेतवे ।।
हूं ॥
तत्त्वे द्वे अक्षरे द्वे च बीजनाडीकखद्वयम् ॥ ७७० ॥
गुणौ मन्त्रौ तथाब्जस्थमेकं कारणमीश्वरम् ।
पदानि भानुसंख्यानि पुराणि दश सप्त च ॥ ७७१ ॥
एकं च विषयं शान्तेः कृष्णाया मध्यतः स्मरेत् ।
ताडयित्वा समादाय मुखमूले नियोजयेत् ॥ ७७२ ॥
जुहुयान्निजबीजेन सांनिध्यायाहुतित्रयम् ।

हूं हूं ॥

विधायां सप्त तत्त्वानि पदानां चैकविंशतिः ॥ ७७३ ॥
षड्वर्णाः शम्बरं चैकं लोकानां पञ्चविंशतिः ।
गुणानां त्रयमेकं च विषयं रुद्रकारणम् ॥ ७७४ ॥
अन्तर्भाव्यातिरक्तायां बीजनाडीकखद्वयम् ।
आदावावाह्य संयोज्य हृत्सूत्रे स्वाणुनार्चयेत् ॥ ७७५ ॥
ततस्तत्संनिधानाय जुहुयादाहुतित्रयम् ।
हूंहूंहूं ॥

चतुर्विंशतितत्त्वानि वर्णानां पञ्चविंशतिः ॥ ७७६ ॥
बीजनाडीकखद्वन्द्वं पदद्व्यधिकविंशकम् ।
लोकानां च चतुर्णां च षष्टिं गुणचतुष्टयम् ॥ ७७७ ॥
मन्त्राणां त्रयमेकं च विषयं कारणं हरिम् ।
अन्तर्भाव्य प्रतिष्ठायां शुक्लायां ताडनादिकम् ॥ ७७८ ॥
विधाय नाभिसूत्रस्थं संनिधानाहुतीर्यजेत् ।
हूंहूंहूंहूं ॥

भुवनानां शतं सार्धं पदानामष्टविंशतिम् ॥ ७७९ ॥
बीजनाडीसमीराणां द्वयमिन्द्रिययोरपि ।
वर्णं तत्त्वं च विषयमेकैकं गुणपञ्चकम् ॥ ७८०
हेतुं ब्रह्माणमब्जस्थं शम्बराणां चतुष्टयम् ।
निवृत्तौ पीतवर्णायामन्तर्भाव्य प्रताडयेत् ॥ ७८१ ॥
आदाय पदभागान्ते सूत्रे विन्यस्य पूजयेत् ।
जुहुयादाहुतीस्तिस्रः संनिधानाय पावके ॥ ७८२ ॥

हूंहूंहूंहूंहूं ॥
इत्यादाय कलाः सूत्रे योजयेच्छिष्यविग्रहे ।
सबीजायां तु दीक्षायां समयाचारपाशतः ॥ ७८३ ॥
देहारम्भकधर्माच्च मन्त्रसिद्धिफलादपि ।
इष्टापूर्तादिधर्माच्च व्यतिरिक्तं प्रबन्धकम् ॥ ७८४ ॥
चैतन्यारोधकं सूक्ष्मं कलानामन्तरे स्मरेत् ।
अनेनैव क्रमेणाथ कुर्यात्तर्पणदीपने ॥ ७८५ ॥
आहुतीभिः स्वमन्त्रेण तिसृभिस्तिसृभिर्यथा ।
ॐ हूं शान्त्यतीताकलापाशाय स्वाहेति तर्पणम् । ॐ हूं
हूं शान्त्यतीताकलापाशाय हूं हूं फडित्यादि दीपनम् ।
तत्सूत्रं व्याप्तिबोधाय कलास्थानेषु पञ्चसु ॥ ७८६ ॥
संरक्ष्य कुङ्कुमाद्येन तत्र साङ्गं शिवं यजेत् ।
हूंफडन्तैः कलामन्त्रैर्भित्त्वा पाशाननुक्रमात् ॥ ७८७ ॥
नमोऽन्तैश्च प्रविश्यान्तः कुर्याद्ग्रहणबन्धने ।
ॐ हूं ३ शन्त्यतीतोकलां गृह्णामि बध्नामि चेत्यादिमन्त्रैः
कलानां ग्रहणबन्धनप्रयोगः ।
पाशादीनां वशीकारो ग्रहणं बन्धनं पुनः ॥ ७८८ ॥
पुरुषं प्रति निःशेषव्यापारप्रतिषेधनम् ।
उपवेश्याथ तत्सूत्रं शिष्यस्कन्धाच्च ग्राहयेत् ॥ ७८९ ॥
विस्मृताद्यघमोषाय शतं मूलेन होमयेत् ।
शराणुसंपुटे पुंसः स्त्रियाश्च प्रणवोदरे ॥ ७९० ॥
हृदस्त्रसंपुटं सूत्रं निधायाभ्यर्चयेद्धृदा ।

सूत्रं शिवेन साङ्गेन कृत्वा संपातशोधितम् ॥ ७६१ ॥
विदध्यात्कलशस्याधो रक्षां विज्ञापयेत् ततः ।
पुष्पं शिष्यकरे दत्त्वा संपूज्य कलशादिकम् ॥ ७६२ ॥
प्रणम्य च वहिर्यायाद्यागमन्दिरमध्यतः ।
मण्डलत्रितयं कृत्वा मुमुक्षूनुत्तराननात् ॥ ७६३ ॥
बुभुक्षून् पूर्ववक्त्रांश्च शिष्यांस्तत्र निवेशयेत् ।
प्रथमं पञ्चगव्यस्य प्राशयेच्चुलुकत्रयम् ॥ ७६४ ॥
पाणिना कुशयुक्तेन आचमेत्सान्तरात्मना ।
चरुकं तद्द्वितीये तु ग्रासत्रितयसंमितम् ॥ ७६५ ॥
अष्टग्रासप्रमाणं वा दशनस्पर्शवर्जितम् ।
पलाशपुटके मुक्त्यै भुक्त्यै पिप्पलपत्रजे ॥ ७६६ ॥
हृदा संभोजयेद्दत्त्वा पूत आचमयेज्जलैः ।
दन्तकाष्ठं हृदा दत्त्वा तद्दन्ताग्रविचर्वितम् ॥ ७६७ ॥
धौतमूर्ध्वमुखं भूमौ क्षेपयेत्पातमुन्नयेत् ।
प्राक्पश्चिमोत्तरे चोर्ध्वे वदने पातमुत्तमम् ॥ ७६८ ॥
सर्वेषामेव शिष्याणामितरास्यमशोभनम् ।
अशोभननिषेधार्थं शतमस्त्रेण होमयेत् ॥ ७६९ ॥
न्यूनादिदोषमोषाय मूलेनाष्टोत्तरं शतम् ।
विधाय स्थण्डिलेशाय सर्वकर्मसमर्पणम् ॥ ८०० ॥
पूजाविसर्जने चास्य चण्डेशस्य च पूजनम् ।
अपनीय च निर्माल्यं त्रिभिर्गोमयगोलकैः ॥ ८०१ ॥
भूमिं संशोध्य मूलेन शेषमग्नौ यजेच्चरोः ।

कलशं लोकपालांश्च पूजयित्वा निरुध्य च ॥ ८०२ ॥
विसृजेद्गणमग्निं च रचितं यदि बाह्यतः ।
बाह्यतो लोकपालानां दत्त्वा संक्षेपतो बलिम् ॥ ८०३ ॥
भस्मना शुद्धतोयैर्वा स्नात्वा यागालयं विशेत् ।
गृहस्थान् दर्भशय्यायां पूर्वशीर्षास्त्ररक्षितान् ॥ ८०४ ॥
हृदा सद्भस्मशय्यायां यतीन् दक्षिणमस्तकान् ।
शिखाबद्धशिखानस्त्ररक्षितान्स्वप्नमानवम् ॥ ८०५ ॥
विज्ञाप्य स्वापयेच्छिष्यांस्ततो यायात्पुनर्बहिः ।
ॐ हिलिहिलि शूलपाणये नमः स्वाहा ।
पञ्चगव्यं चरुं प्राश्य, गृहीत्वा दन्तधावनम् ॥८०६॥
समाचम्य शिवं ध्यात्वा शय्यामास्थाय पावनीम् ।
दीक्षागतक्रियाकाण्डं संस्मरेत्संविशेद्गुरुः ॥८०७॥
मन्त्राणां दीपनं प्रोक्तं ततः सूत्रावलम्बनम् ।
सुषुम्नानाडिसंयोगं शिष्यचैतन्ययोजनम् ॥ ८०८ ॥
ग्रहणं ताडनं योगं पूजातर्पणदीपनम् ।
बन्धनं शान्त्यतीतादेः शिवकुम्भसमर्पणम् ॥ ८०९ ॥
एवं कर्मक्रमः प्रोक्तः पाशबन्धे शिवेन तु ।
इति संक्षेपतः प्रोक्तो विधिर्दीक्षाधिवासने ॥ ८१० ॥
अथ प्रातः समुत्थाय कृतस्नानादिको गुरुः ।
शिष्यान् स्वप्नं यथादृष्टं संपृच्छेच्छुभहेतवे ॥ ८११ ॥
दध्यार्द्रमांसमद्यादेः प्रशस्ताभ्यवहारितम् ।
गजाद्यारोहणं धन्यं सितवस्त्रावगुण्ठनम् ॥ ८१२॥

निन्द्यः स्वावयवच्छेदो मषीकर्दममर्दनम् ।
तैलाभ्यङ्गान्धकूपादिपतनं न प्रशस्यते ॥ ८१३ ॥
प्रायश्चित्तानुसारेण कृत्वा दुःस्वप्नशान्तये ।
नित्यकर्मद्वयं कृत्वा प्रविश्य मखमण्डपम् ॥ ८१४ ॥
स्वाचान्तनित्यवत्कर्म कुर्यान्नैमित्तिके विधौ ।
ततः संशोध्यमध्वानमुष्णीषं भूषणानि च ॥ ८१५ ॥
विन्यस्यात्मनि पूर्वोक्तं शिवहस्तं च भास्वरम् ।
कुम्भार्थे पूजयेदीशमिन्द्रादीनप्यनुक्रमात् ॥ ८१६ ॥
मण्डले स्थण्डिले वापि प्रकुर्वीत शिवार्चनम् ।
तर्पणं पूजनं वह्नेः पूर्णान्तं वह्नितर्पणम् ॥ ८१७ ॥
दुःस्वप्नदोषमोषार्थमस्त्रेणाष्टाधिकं शतम् ।
हुत्वा हूंसंपुटेनैव विदध्यान्मन्त्रदीपनम् ॥ ८१८ ॥
अन्तर्बलिविधानं च मध्ये स्थण्डिलकुम्भयोः ।
कृत्वा शिष्यप्रवेशाय लब्धानुज्ञो बहिर्व्रजेत् ॥ ८१९ ॥
कुर्यात्समयवत्तत्र मण्डलारोपणादिकम् ।
संपातहोमं तन्नाडीरूपदर्भकरान्तगम् ॥ ८२० ॥
एतत्संनिधये तिस्रो हुत्वा मूलाणुनाहुतीः ।
कुम्भस्थं शिवमभ्यर्च्य पाशसूत्रमुपाहरेत् ॥ ८२१ ॥
स्वदक्षिणोर्ध्वकायस्य शिष्यस्याभ्यर्चितस्य च ।
तच्छिखायां निबध्नीयात्पादाङ्गुष्ठावलम्बितम् ॥ ८२२ ॥
तं निवेश्य निवृत्तेस्तु व्याप्तिमालोक्य चेतसा ।
ज्ञेयानि भुवनान्यस्यां शतमष्टाधिकं ततः ॥ ८२३ ॥

कपालोऽजोऽहिर्बुध्न्यश्च[1] वज्रदेहः प्रमर्दनः ।
विभूतिरव्ययः [2]शान्तः पिनाकी त्रिदशाधिपः ॥ ८२४ ॥
अग्निभद्रो हुताशश्च पिङ्गलः [3]खनको हरः ।
ज्वलनो दहनो बभ्रुर्भस्मान्तकक्षयान्तकौ ॥ ८२५ ॥
[4]दम्यो मृत्युहरो धाता विधाता कर्तृसंज्ञकः ।
[5] ऽ'ऽधर्मश्च संयोक्ता च वियोजकः ॥ ८२६ ॥
नैर्ऋता मारुतो हर्ता[3] क्रूरदृष्टिर्भयानकः ।
ऊर्ध्वकेशो विरूपाक्षो धूम्रो लोहितदंष्ट्रिणौ[6] ॥ ८२७ ॥
बलश्चातिबलश्चैव[5] पाशहस्तो महाबलः ।
श्वेतश्च जयभद्रश्च दीर्घबाहुर्जलान्तकः ॥ ८२८ ॥
वडवास्यश्च भीमश्च दश ते वरुणोदिताः ।
शीघ्रो लघुर्वायुवेगः सूक्ष्मस्तीक्ष्णो भयानकः ॥ ८२९ ॥
पञ्चान्तकः पञ्चशिखः कपर्दी मेघवाहनः ।
जटामुकुटधारी च नानारत्नधरस्तथा ॥ ८३० ॥
निधीशो रूपवान्धन्यः सौम्यदेहः प्रसादकृत[7] ।
प्रकामोऽप्यथ लक्ष्मीवान्कामरूपा दशोत्तरे ॥ ८३१ ॥
विद्याधरो ज्ञानधरः सर्वज्ञो बोधपारगः ।
मातृवृत्तश्च पिङ्गाक्षो भूतपालो बलिप्रियः ॥ ८३२ ॥

---

१ 'कपालीशो ह्यजो ब्रध्नः' । २ 'शास्ता' । ३ 'खादकः' ।
४ 'याम्यो संयोक्ता च वियोक्ता च धर्मो धर्मपतिस्तथा ।
५ 'हन्ता'। ६ 'दंष्ट्रिकौ ७ 'मेघनादी सुनादी च' ।
८ प्रभासकः' ।

सर्वविद्याविधाता च सुखदुःखकरो दश ।
अनन्तः पालको धीरः पातालाधिपतिस्तथा ॥ ८३३ ॥
वृषा वृषधरो वीरो ग्रसनः सर्वतोमुखः ।
लोहितश्चेति विज्ञेया दश रुद्रास्तलस्थिताः ॥ ८३४ ॥
शंभुर्विभुर्गणाध्यक्षस्त्र्यक्षस्त्रिदशवन्दितः ।
संवाहश्च विवाहश्च नभो लिप्सुर्विचक्षणः ॥ ८३५ ॥
अधो हूहुककालाग्निरुद्रो हाटक एवच ।
कूष्माण्डश्चैव सत्यश्च ब्रह्मा विष्णुश्च सप्तमः ॥ ८३६ ॥
रुद्रश्चाष्टाविमे रुद्रा कटाहस्यान्तरे स्थिताः ।
एतेषामपि नामानि भुवनानामपि स्मरेत् ॥ ८३७ ॥

सद्भावेश्वर महातेजः योगाधिपते मुञ्च २ प्रमथ २ शर्व २ भव २ भवोद्भव सर्वभूतसुखप्रद सर्वसान्निध्यकर ब्रह्मविष्णु रुद्रपर अनर्चितानर्चित असंस्तुतासंस्तुत पूर्वस्थित २ साक्षिन् २ तुरु २ पतङ्ग २ पिङ्ग २ ज्ञान २ शब्द २ सूक्ष्म २ शिव सर्व सर्वद ओं नमोनमः ओंनमः शिवाय नमोनमः इति अष्टाविंशतिपदानि ॥

सद्योहृदयनेत्राणि मन्त्रवर्णास्तु कामतः ।
बीजे शकारलौ नाड्यौ द्वे इडापिंगलाह्वये ॥ ८३८ ॥
प्राणापानावुभौ वायू घ्राणोपस्थौ तथेन्द्रिये ।
गन्धस्तु विषयः प्रोक्तो गन्धादिगुणपञ्चकम् ॥ ८३९ ॥
पार्थिवं मण्डलं पीतं वज्राङ्कं चतुरश्रकम् ।

विस्तारो योजनानां तु कोटिरस्य शतं मता ॥ ८४० ॥
अत्रैवान्तर्गता ज्ञेयो योनयोऽथ चतुर्दश ।
प्रथमाः षड् मृगादीनामष्टान्या देवयोनयः ॥ ८४१ ॥
मृगः पक्षी तु पशवश्चतुर्थास्तु सरीसृपाः ।
स्थावरं पञ्चमं सर्वं योनिः षष्ठी तु मानुषी ॥ ८४२ ॥
पैशाचं राक्षसं याक्षं गान्धर्वं चैन्द्रमेव च ।
सौम्यं प्राजेश्वरं ब्राह्ममष्टमं परिकीर्तितम् ॥ ८४३ ॥
अष्टानां पार्थिवं तत्त्वमधिकारास्पदं महत् ।
लयस्तु प्रकृतौ बुद्धौ भोगो ब्रह्मा च कारणम् ॥ ८४४ ॥
ततो जाग्रदवस्थान्तैः समस्तैर्भुवनादिभिः ।
निवृत्तिं गर्भितां ध्यात्वा स्वमन्त्रे विनियोज्य च ॥८४५॥

ॐ हां ह्लां हां निवृत्तिकलापाशाय हूं फट् स्वाहा । ततः हां ह्लां हों निवृत्तिकलापाशाय हूं फट् स्वाहेइत्यनेन अङ्कुशमुद्रया पूरकेण आकृष्य ओंहूंहांह्लांहांहूं निवृत्तिकलापाशाय हूं फट् इत्यनेन संहारमुद्रया कुम्भकेन नाभ्यधःस्थानादादाय ओं हां निवृत्तिकलापाशाय नमः इत्यनेन उद्भवमुद्रया रेचकेन कुण्डे कृताधारां संस्थाप्य ओंहां निवृत्तिकलापाशाय नमः इत्यनेन अर्घ्यं दत्त्वा संपूज्य च अनेनैव स्वाहान्तेन तर्पणाय आहुतित्रयं संनिधानाहुतित्रितयं च दत्त्वा ओंहां ब्रह्मणे नमः इति ब्रह्माणमावाह्य संपूज्य च स्वाहान्तेन संतर्प्य

ब्रह्मंस्तवाधिकारेऽस्मिन्मुमुक्षुं दीक्षयाम्यहम् ।
भाव्यं त्वयानुकूलेन विधिं विज्ञापयेदिति ॥ ८४६ ॥

आवाहयेत्ततो देवीं रक्तां वागीश्वरीं हृदा ।
इच्छाज्ञानक्रियारूपां षड्विधाध्वैककारणम् ॥८४७॥
पूजयेत्तर्पयेद्देवीं प्रकारेणामुना ततः ।
वागीश्वरं च निःशेषयोनिविक्षोभकारकम् ॥८४८॥
हृत्स्थं पूजात्मबीजादिहूंफडन्तशराणुना ।
ताडयेद्धृदयं तस्य प्रविशेच्च विधानवित् ॥ ८४९ ॥
ततः शिष्यस्य चैतन्यं हृदि वह्निकणोपमम् ।
निवृत्तिस्थं युतं पाशैर्ज्येष्ठया विभजेद्यथा ॥ ८५० ॥
ॐ हां हं हः हूं फट् ।
ॐ हां स्वाहेत्यनेनाथ पूरेणाङ्कुशमुद्रया ।
हृद्याकृष्यात्ममन्त्रेण गृहीत्वात्मनि योजयेत् ॥ ८५१ ॥
ॐ हां हां हां आत्मने नमः ।
पित्रोर्विभाव्य संयोगं चैतन्यं रेचकेन तत् ।
ब्रह्मादिकारणत्यागक्रमान्नीत्वा शिवात्मकम् ॥ ८५२ ॥
गर्भाधानार्थमादाय युगपत्सर्वयोनिषु ।
क्षिपेद्वागीश्वरीयोनौ वामयोद्भवमुद्रया ॥ ८५३ ॥
ॐ हां हां हां आत्मने नमः ।
पूजयेदप्यनेनैव तर्पयेदपि पञ्चधा ।
अस्य योनिषु सर्वासु देहसिद्धिं हृदार्चयेत् ॥ ८५४ ॥
नात्र पुंसवनं स्त्र्यादिप्रसवस्यापि संभवात् ।
सीमन्तोन्नयनं वापि दैवादन्धादिदेहतः ॥ ८५५ ॥
शिरसा जन्म कुर्वीत युगपत्सर्वदेहिनाम् ।
तथैव भावदोषाणामधिकारं शिवाणुना ॥ ८५६ ॥

भोगं कवचमन्त्रेण शस्त्रेण विषयात्मनोः ।
मोहं रूपमभेदं च लयसंज्ञं विभावयेत् ॥ ८५७ ॥
शिवेन स्रोतसां शुद्धिं हृदा तत्त्वविशोधनम् ।
पञ्च पञ्चाहुतीर्दद्याद् गर्भाधानादिषु क्रमात् ॥ ८५८ ॥
मायीयमलकार्मादिपाशबन्धनिवृत्तये ।
निष्कृतौ च हृदा पश्चाद्यजेत शतमाहुतीः ॥ ८५९ ॥
मलशक्तितिरोधाने पाशानां च वियोजने ।
स्वाहान्तायुधमन्त्रेण पञ्च पञ्चाहुतीर्यजेत् ॥ ८६० ॥
मलाद्यन्तःस्थपाशस्य सप्तधा चास्त्रजप्तया ।
कर्तर्या च्छेदनं कुर्यात्कलाशस्त्रेण तद्यथा ॥ ८६१ ॥
ओंहांहांहां निवृत्तिकलापाशाय हःहूंफट् ।
बन्धकत्वनिवृत्त्यर्थं हस्ताभ्यां च शराणुना ।
विमृद्य वर्तुलीकृत्य घृतपूर्णे स्रुवे क्षिपेत् ॥ ८६२ ॥
दहेदथ कलास्त्रेण केवलास्त्रेण भस्मसात् ।
कुर्यात्पञ्चाहुतीर्दत्त्वा पाशाङ्कुरनिवृत्तये ॥ ८६३ ॥
ओंहः अस्त्राय हूं फट् स्वाहा ।
प्रायश्चित्तं ततः कुर्यादस्त्राहुतिभिरष्टभिः ।
अथावाह्य विधातारं तर्पयेत्पूजयेत्तथा ॥ ८६४ ॥
ओंहां शब्दस्पर्शौ शुल्कं ब्रह्मन् गृहाण स्वाहेत्यादि ।
आहुतित्रितयेणाधिकारमस्य समर्पयेत् ।
दग्धनिःशेषपाशस्य ब्रह्मन्नस्य शिशोस्त्वया ॥ ८६५ ॥

बन्धाय न पुनः स्थेयं शिवाज्ञां श्रावयेदिति ।
ततो विसृज्य धातारं नाड्या दक्षिणया शनैः ॥८६६॥
संहारमुद्रयात्मानं कुम्भकेन निजाणुना ।
राहुमुक्तैकदेशेन चन्द्रबिम्बेन संनिभम् ॥ ८६७ ॥
आदाय योजयेत्सूत्रे रेचकेनोद्भवाख्यया ।
पूजयित्वार्घ्यपात्रस्थं तोयबिन्दुं सुधोपमम् ॥८६८॥
आप्यायनाय शिष्यस्य गुरुः शिरसि विन्यसेत् ।
विसृज्य पितरौ दद्याद्वौषडन्तशराणुना ॥८६९॥
पूरणाय विधेः पूर्णां निवृत्तिरिति शोधिता ।
ॐहूंहां अमुकात्मनो निवृत्तिकलाशुद्धिरस्तु स्वाहा वौषडिति
र्णा ।
कलयोरथ सन्धानं कुर्याच्छुद्धाविशुद्धयोः ॥८७०॥
ह्रस्वदीर्घप्रयोगेन शान्तनादोन्तसंज्ञिना ।
ॐहांह्लांह्लींहां ।
अप्तेजोवायुराकाशतन्मात्रेन्द्रियबुद्धयः ॥ ८७१ ॥
गुणत्रयमहङ्कारश्चतुर्विंशः पुमानिति ।
प्रतिष्ठायां निविष्टानि तत्त्वान्येतानि भावयेत् । ॥८७२॥
पञ्चविंशतिसंख्यानि खादियान्ताक्षराणि च ।
पञ्चाशदधिका षड्भिर्भावनास्तुल्यसंज्ञकाः ॥ ८७३ ॥
तावन्त एव रुद्राश्च विज्ञेयास्तत्र तद्यथा ।
अमरेशः प्रभासश्च नैमिषः पुष्करोऽपि च ॥ ८७४ ॥
तथाषाढिश्च डिण्डिश्च भारभूतिरथाष्टमः ।

लकुलीशो हरिश्चन्द्रः श्रीशैलो दशमः स्मृतः ॥ ८७५ ॥
जल्प आम्रातकेशश्च महाकालोऽथ मध्यमः ।
केदारो भैरवश्चैव द्वितीयाष्टकमीरितम् ॥ ८७६ ॥
ततो गया कुरुक्षेत्रं नालं कनखलं तथा ।
विमलश्चाट्टहासश्च महेन्द्रो भीम एव च ॥ ८७७ ॥
वस्त्रापदं रुद्रकोटिरविमुक्तो महालयः ।
गोकर्णो भद्रकर्णश्च स्वर्णाक्षः स्थाणुरेव च ॥ ८७८ ॥
अथाजेशश्च सर्वज्ञो भास्वरस्तदनन्तरम् ।
सुबाहुर्मन्त्ररूपी च विशालो जटिलस्तथा ॥ ८७९ ॥
रौद्रोऽथ पिङ्गलाख्यश्च कालदंष्ट्री भवेत्ततः ।
त्रिधुरश्चैव घोरश्च प्राजापत्यो हुताशनः ॥ ८८० ॥
कालरूपी तथा कालकर्णोऽप्यथ भयानकः ।
पतङ्गः पिङ्गलश्चैव हरो विधातृसंज्ञकः ॥ ८८१ ॥
शङ्कुकर्णाभिधानश्च श्रीकण्ठश्चेन्दुमौलिना ।
सह ते भवपर्यन्ताः कथ्यन्तेऽथ पदान्यपि ॥ ८८२ ॥

व्यापिन् अरूपिन् प्रथम तेजः ज्योतिः अरूप अनग्ने अधूम अभस्मन् अनादे नानानाना धूधूधूधू ॐभूः ॐभुवः ॐस्वः अनिधन निधन निधनोद्भव शिव शर्व परमात्मन् महेश्वर महादेव सद्भावेश्वर महातेजः योगाधिपते मुञ्च प्रमथ शर्व इति, द्वात्रिंशत्पदानि ।

बीजे उभे त्रयो मन्त्रा वामदेवशिरःशिखाः ।

गान्धारी च सुषुम्ना च नाड्यौ द्वे मारुतौ तथा ॥ ८८३ ॥
समानोदाननामानौ रसना पायुरिन्द्रिये ।
रसस्तु विषयो रूपशब्दस्पर्शरसा गुणाः ॥ ८८४ ॥
मण्डलं चार्धचन्द्रं च पुण्डरीकाङ्कितं सितम् ।
सुप्तावस्थो प्रतिष्ठायां कारणं गरुडध्वजः ॥ ८८५ ॥
प्रतिष्ठान्तर्गतं सर्वं संचिन्त्य भुवनादिकम् ।
शिष्यदेहे स्वमन्त्रेण प्रविश्यैनं वियोजयेत् ॥ ८८६ ॥

ओं ह्रांह्रींह्रां प्रतिष्ठाकलापाशाय हूं फट्, स्वाहान्तेन अनेनैव पूरकेण अङ्कुशमुद्रया समाकर्षेत् । ओंहूंह्रींह्रां प्रतिष्ठाकलापाशाय नमः इत्यनेनैव उद्भवमुद्रया रेचकेन कुण्डे समादापयेत् ओंह्रांह्रांह्रींह्रां प्रतिष्ठोकलाद्वाराय नमः इत्यनेन अर्घयित्वापूज्य स्वाहान्तेन आहुतीनां त्रयेण सन्तर्प्य, सन्निधाप्य त्रयेणैव ततः ओं ह्रां विष्णवे नमः इति विष्णुमावाह्य संपूज्य संतर्प्य

विष्णो तवाधिकारेऽस्मिन्मुमुक्षुं दीक्षयाम्यहम् ।
भाव्यं त्वयानुकूलेन विष्णुं विज्ञापयेदिति ॥ ८८७ ॥
ततो वागीश्वरीं देवीं वागीशमपि पूर्ववत् ।
आवाह्याभ्यर्च्य संतर्प्य शिष्यं वक्षसि ताडयेत् ॥ ८८८ ॥

ओंह्रांहंहः हूं फट् ।

प्रविशेदप्यनेनैव चैतन्यं विभजेत्ततः ।
शस्त्रेण पाशसंयुक्तं ज्येष्ठयाङ्कुशमुद्रया ॥ ८८९ ॥
स्वाहान्तेन हृदाकृष्य तेनैव पुटितात्मना ।

गृहीत्वा तं नमोऽन्तेन निजात्मनि नियोजयेत् ॥८९०॥

ॐ हांहांहां आत्मने नमः ।

पूर्ववत्पितृसंयोगं भावयित्वोद्भवाख्यया ।

वामया तदनेनैव देवीगर्भे विनिक्षिपेत् ॥ ८९१ ॥

ॐ हांहांहां आत्मने नमः ।

देहोत्पत्तौ हृदा पश्च शिरसा त्वात्मने तथा ।

शिखया चाधिकाराय भोगाय कवचाणुना ॥ ८९२ ॥

लयाय चास्त्रमन्त्रेण स्रोतःसिद्ध्यै शिवाणुना ।

तत्त्वशुद्ध्यै हृदेत्येवं गर्भाधानादि पूर्ववत् ॥ ८९३ ॥

शिरसा पाशशैथिल्ये निष्कृत्यै च शतं जपेत् ।

मलशक्तितिरोधाने पञ्चास्त्रेणाहुतीर्यजेत् ॥८९४॥

एवं पाशवियोगेऽपि ततः सप्तास्त्रजप्तया ।

छिन्द्यादस्त्रेण कर्तर्या कलाबीजवता यथा ॥ ८९५ ॥

ॐ हीं प्रतिष्ठाकलापाशाय हूं फट् ।

विमृद्य वर्तुलीकृत्य पाशशस्त्रेण पूर्ववत् ।

घृतपूर्णस्रुवे दत्वा कलास्त्रेणैव होमयेत् ॥ ८९६ ॥

अस्त्रेण जुहुयात्पञ्च पाशाङ्कुरनिवृत्तये ।

प्रायश्चित्तनिषेधार्थं दद्यादष्टाहुतीस्ततः ॥ ८९७ ॥

ॐ हः अस्त्राय हूं फट् ।

हृदावाह्य हृषीकेशं कृत्वा पूजनतर्पणे ।

पूर्वोक्तविधिना कुर्यादधिकारसमर्पणम् ॥ ८९८ ॥

ॐहां विष्णो रसं शुल्कं गृहाण स्वाहा ।

निःशेषदग्धपाशस्य पशोरस्य हरे त्वया ।
न स्थेयं बन्धकत्वेन शिवाज्ञां श्रावयेदिति ॥ ८९९ ॥

ततो विसृज्य गोविन्दं रौद्र्यात्मानं नियोज्य च ।
राहुमुक्तार्धदेशेन चन्द्रबिम्बेन संनिभम् ॥ ९०० ॥

संहारमुद्रयात्मस्थं विधायोद्भवमुद्रया ।
सूत्रे संयोज्य विन्यसेत्तोयबिन्दुं यथा पुरा ॥९०१॥

विसृज्य पितरौ वह्नेः पूजितौ कुसुमादिभिः ।
दद्यात्पूर्णां विधानेन प्रतिष्ठापि विशोधिता ॥ ९०२ ॥

सन्धानमथ विद्यायाः प्राचीनकलया सह ।
कुर्वीत पूर्ववत्तत्र तत्त्ववर्णादि तद्यथा ॥ ९०३ ॥

ॐहांहींहूंहां इति सन्धाने ।

रागश्च शुद्धविद्या च नियतिः कलया सह ।
कालो माया तथा विद्या तत्त्वानामिति सप्तकम् ॥९०४॥

रलवाः शषसा वर्णाः षड्विद्यायां प्रकीर्तिताः ।
पदानि प्रणवादीनि एकविंशतिसंख्यया ॥ ९०५ ॥

ॐनमः शिवाय सर्वप्रभवे शिवाय ईशानमूर्ध्ने तत्पुरुषवक्त्राय अघोरहृदय य वामदेवगुह्याय सद्योजातमूर्तये ॐनमोनमः गुह्यातिगुह्याय गोप्त्रे अनिधनाय सर्वयोगाधिकृताय सर्वयोगाधिपाय ज्योतीरूपाय परमेश्वराय अचेतन् २ व्योमन् २ ।

रुद्राणां भुवनानां च स्वरूपमथ कथ्यते ।
प्रमथो वामदेवश्च सर्वदेवभवोद्भवौ ॥ ९०६ ॥

वज्रदेहः प्रभुर्धाता क्रमविक्रमसुप्रभाः ।
वुद्धः प्रशान्तनामा च ईशानोऽक्षरसंज्ञकः ॥ ९०७ ॥
शिवश्च सुशिवो बभ्रुरक्षयः शंभुरेव च ।
अदृष्टरूपनामान्यस्तथान्यो रूपवर्धनः ॥ ९०८ ॥
मनोन्मनो महावीरश्चित्राङ्गस्तदनन्तरम् ।
कल्याण इति विज्ञेयाः पञ्चविंशतिसंख्यया ॥ ९०९ ॥
मन्त्रोऽघोरो मरौ बीजे नाड्यौ द्वे तनुते तथा ।
पूषा च हस्तिजिह्वा च व्याननागौ प्रभञ्जनौ ॥९१० ॥
विषयो रूपमेवैकमिन्द्रिये पादचक्षुषी ।
शब्दःस्पर्शश्च रूपं च त्रय एते गुणाः स्मृताः ॥ ९११ ॥
अवस्थात्र सुषुप्तेति रुद्रदेवस्तु कारणम् ।
विद्यामध्यगतं सर्वं भावयेद्भुवनादिकम् ॥ ९१२ ॥
ॐहूंहैंहां संधाने ।
त्रिकोणमण्डलं रक्तं स्वस्तिकाङ्कं विचिन्तयेत् ।
ताडनं छेदनं तत्र प्रवेशं च वियोजनम् ॥९१३॥
आकृष्य ग्रहणं कुर्याद्विद्याया हृत्प्रदेशतः ।
आत्मन्यारोप्य संगृह्य कलां कुण्डे निवेशयेत् ॥ ९१४ ॥
रुद्रं कारणमावाह्य विज्ञाप्य च शिशुं प्रति ।
पित्रोरावाहनं कृत्वा हृदये ताडयेच्छिशुम् ॥ ९१५ ॥
प्रविश्य पूर्वमस्त्रेण तदात्मानं वियोजयेत् ।
आकृष्यादाय पूर्वोक्तविधिनात्मनि योजयेत् ॥९१६॥
वामया योजयेद्योनौ गृहीत्वा द्वादशान्ततः ।

कुर्वीत देहसंपत्तिं जन्माधिकारमेव च ॥ ९१७ ॥
भोगं लयं तथा स्रोतःशुद्धिं तत्त्वविशोधनम् ।
निःशेषमलकर्मादि पाशबन्धनिवृत्तये ॥९१८॥
निष्कृत्यैव विधानेन यजेत शतमाहुतीः ।
शस्त्रेण पाशशैथिल्यमलशक्तितिरोहितीः ॥९१९॥
छेदनं मर्दनं तेषां वर्तुलीकरणं तथा ।
दाहस्त्वमङ्कुराभावं प्रायश्चित्तं यथोदितम् ॥ ९२० ॥
रुद्रस्यावाहनं पूजां रूपगन्धसमर्पणम् ।
ॐ हां रूपगन्धौ शुल्कं रुद्र गृहाण स्वाहा ।
संश्राव्य शाम्भवीमाज्ञां रुद्रं विसृज्य कारणम् ॥ ९२१ ॥
विधायात्मनि चैतन्यं पाशसूत्रे नियोजयेत् ।
बिन्दुं शिरसि निक्षिप्य विसृजेत्पितरौ ततः ॥ ९२२।
दद्यात्पूर्णां विधानेन समस्तविधिपूरणीम् ।
पूर्वोक्तविधिना कार्यं विद्यायां ताडनादिकम् ॥९२३॥
स्वबीजं तु विशेषः स्यादिति विद्या विशोधिता ।
संदध्याद्ध्वना विद्यां शान्त्या सार्धं यथाविधि ॥ ९२४
ॐ हांहौंहां सन्धाने ।
शान्तौ तत्त्वद्वये लीनौ तावीश्वरसदाशिवौ ।
हकारश्च वकारश्च द्वौ वर्णौ परिकीर्तितौ ॥ ९२५ ॥
रुद्राः समाननामानो भुवनैः सह तद्यथा ।
प्रभवः समयः क्षुद्रो विमलः शिव इत्यपि ॥ ९२६ ॥
घनो निरञ्जनोऽङ्कारः सुशिरोदीप्तकारणौ ।

त्रिदशेश्वरनामा च त्रिदशः कालसंज्ञक। ॥ ९२७
सूक्ष्मो भुजेश्वरश्चेति रुद्राः शान्तौ प्रतिष्ठिताः ।
व्योमव्यापिने व्योमरूपाय सर्वव्यापिने शिवाय अनन्ताय अनाथाय अनाश्रिताय ध्रुवाय शाश्वताय योगपीठसंस्थिताय नित्यंयोगिने ध्यानाहराय, इति द्वादश पदानि
पुरुषः कवचो मन्त्रौ बीजे बिन्दुयकारकौ ॥ ९२८ ॥
अलम्बुसा यशा नाड्यौ वायू कृकरकूर्मकौ ।
इन्द्रिये त्वक्करावस्याः स्पर्शस्तु विषयो मतः ॥ ९२९ ॥
गुणौ स्पर्शनिनादौ द्वावेकः कारणमीश्वरः ।
तुर्यावस्थेति शान्तास्थं संभाव्य भुवनादिकम् ॥९३०॥
विदध्यात्ताडनं छेदं प्रवेशं च वियोजनम् ।
आकृष्य ग्रहणं कुर्याच्छान्तेर्वदनसूत्रतः ॥ ९३१ ॥
आत्मन्यारोप्य संगृह्य कलां कुण्डे निवेशयेत् ।
ईश तवाधिकारेऽस्मिन्मुमुक्षुं दीक्षयाम्यहम् ॥ ९३२ ॥
भाव्यं त्वयानुकूलेन कुर्याद्विज्ञापनामिति ।
आवाहनादिकं पित्रोः शिष्यस्य ताडनादिकम् ॥९३३
विधायादाय चैतन्यं विधिनात्मनि योजयेत् ।
पूर्ववत्पितृसंयोगं भावयित्वोद्भवाख्यया ॥९३४॥
हृत्संपुटात्मबीजेन देवीगर्भे नियोजयेत् ।
देहोत्पत्तौ हृदा पञ्च शिरसा ज्ञानहेतवे ॥९३५॥
शिखया चाधिकाराय भोगाय कवचाणुना ।
लयाय चास्त्रमन्त्रेण स्रोतःशुद्धौ शिवेन च ॥९३६॥

तत्त्वशुद्धौ हृदेत्येवं गर्भाधानादि पूर्ववत् ।
वर्मणा पाशशैथिल्ये निष्कृत्यैव शतं जपेत् ॥९३७॥
मलशक्तितिरोधाने शस्त्रेणाहुतिपञ्चकम् ।
एवं पाशवियोगेऽपि ततः सप्तास्त्रजप्तया ॥ ९३८ ॥
छिन्द्यादस्त्रेण कर्तर्या पाशबीजविशुद्धये ।
ओंह्रौं शान्ताकलापाशाय नमःहःहूंफट् ।
विमृद्य वर्तुलीकृत्य पाशमस्त्रेण पूर्ववत् ॥९३९॥
घृतपूर्णे स्रुवे दत्त्वा कलास्त्रेणैत्र होमयेत् ।
अस्त्रेण जुहुयात्पञ्च पशाङ्कुरनिवृत्तये ॥ ९४० ॥
प्रायश्चित्तनिषेधार्थं दद्यादष्टाहुतीरथ ।
ओंहः अस्त्राय हूंफट् ।
हृदेश्वरं समावाह्य कृत्वा पूजनतर्पणे ॥ ९४१ ॥
विदध्यात् विधानेन तस्मै शुल्कसमर्पणम्
ओंह्रां ईश्वर बुद्ध्यहङ्कारौ शुल्कं गृहाण स्वाहा।
निःशेषदग्धपाशस्य पशोरस्येश्वर त्वया ॥ ९४२ ॥
न स्थेयं बन्धकत्वेन शिवाज्ञां श्रावयेदिति ।
विसृजेदीश्वरं देवं रौद्रयात्मानं नियोजयेत् ॥ ९४३ ॥
सूत्रे संयोजयेदेनमुद्धृत्योद्भवमुद्रया ।
दद्यान्मूलेन शिष्यस्य शिरस्यमृतबिन्दुकम् ॥ ९४४॥
विसृजेत्पितरौ वह्नेः पूजितौ कुसुमादिभिः ।
दद्यात्पूर्णां विधानेन निःशेषविधिपूरणीम् ॥ ९४५ ॥
अस्यामपि विधातव्यं पूर्ववत्ताडनादिकम् ।

सबीजं तु विशेषः स्याच्छुद्धिः शान्तेरितीरिता ॥६४६॥
सन्धानं शान्त्यतीतायाः शान्त्या सार्धं विशुद्धया ।
कुर्वीत पूर्ववत्तत्र वर्णतत्त्वादि तद्यथा ॥ ६४७ ॥
ॐ हां हौं हूं हां इति सन्धाने ।
उभौ शक्तिशिवौ तत्त्वे भुवनाष्टकमिन्धिकाम् ।
दीपिकां रोचिकां चैव मोचिकामूर्ध्वगामिनीम् ॥६४८॥
व्योमरूपमनाथं च स्यादनाश्रितमष्टकम् ।
ओंकारः पदमीशानो मन्त्रो वर्णाश्च षोडश ॥ ६४९ ॥
अकारादिविसर्गान्ता बीजे नादहकारकौ ।
कुहूश्च शंखिनी नाड्यौ देवदत्तधनञ्जयौ ॥ ६५० ॥
मारुतौ वदनश्रोत्रे इन्द्रिये विषयो रवः ।
शब्दो गुणो ह्यवस्था तु तुर्यातीता च पञ्चमी ॥ ६५१ ॥
हेतुः सदाशिवो देव इति तत्त्वादिसंचयम् ।
संचिन्त्य शान्त्यतीतस्थं विदध्यात्ताडनादिकम् ॥६५२॥
कलापाशं समाताड्य फडन्तेन विबोध्य च ।
प्रविश्य तु नमोऽन्तेन फडन्तेन वियोजयेत् ॥ ६५३ ॥
शिखा हृत्संपुटीभूतं स्वाहान्तं वर्ममुद्रया ।
पूरकेण समाकृष्य पाशमस्तकसूत्रतः ॥ ६५४ ॥
कुम्भकेन समादाय रेचकेनोद्भवाख्यया ।
हृत्संपुटनमोऽन्तेन वह्निकुण्डे निवेशयेत् ॥ ६५५ ॥
अस्याः पूजादिकं सर्वं निवृत्तेरिव साधयेत् ।

सदाशिवं समावाह्य पूजयित्वा प्रतर्प्य च ॥ ६५६ ॥
सादाख्यं तेऽधिकारेऽस्मिन्मुमुक्षुं दीक्षयाम्यहम् ।
भाव्यं त्वयानुकूलेन भक्त्या विज्ञापयेदिति ॥ ६५७ ॥
पित्रोरावाहनं पूजां कृत्वा तर्पणसंनिधी ।
हृत्संपुटात्मबीजेन शिष्यं वक्षसि ताडयेत् ॥ ६५८ ॥
ॐ हां हां हां हः हूं फट् ।
प्रविशेदप्यनेनैव चैतन्यं विभजेत्ततः ।
शस्त्रेण पाशसंयुक्तं ज्येष्ठयाङ्कुशमुद्रया ॥ ६५९ ॥
स्वाहान्तेन समाकृष्य तेनैव पुटितात्मना ।
गृहीत्वा तु नमोऽन्तेन निजात्मनि नियोजयेत् ॥६६०॥
ॐ हां हां हां आत्मने नमः ।
पूर्ववत्पितृसंयोगं भावयित्वोद्भवाख्यया ।
वामया तदनेनैव देवीगर्भे नियोजयेत् ॥ ६६१ ॥
गर्भाधानादिकं सर्वं पूर्वोक्तविधिना चरेत् ।
मूलेन पाशशैथिल्ये निष्कृत्यैवं शतं जपेत् ॥ ६६२ ॥
मलशक्तितिरोधाने पाशानां च नियोजने ।
पञ्च पञ्चाहुतीर्दद्यात्त्वायुधेन यथा पुरा ॥६६३॥
पाशानायुधमन्त्रेण सप्तधा चाभिजप्तया ।
भिन्द्यादस्त्रेण कर्तर्या कलाबीजवता यथा ॥६६४॥
ॐहः हां शान्त्यतीताकलापाशाय हूं फट् ।
विमृद्य वर्तुलीकृत्य पाशानस्त्रेण पूर्ववत् ॥ ६६५ ॥
घृतपूर्णे स्रुवे दत्त्वा कलास्त्रेणैव होमयेत् ।

अस्त्रेण जुहुयात्पश्च पाशाङ्कुरनिवृत्तये ॥६६६॥
प्रायश्चित्तनिषेधार्थं दद्यादष्टाहुतीस्ततः।
सदाशिवं समावाह्य कृत्वा पूजनतर्पणे ॥६६७॥
पूर्वोक्तविधिना दद्यादधिकारसमर्पणम्।
ॐ हां सदाशिव मनोबिन्दुं शुल्कं गृहाण स्वाहा।
निःशेषदग्धपाशस्य पशोरस्य सदाशिव ॥६६८॥
बन्धाय न पुनः स्थेयं शिवाज्ञां श्रावयेदिति।
मूलेन जुहुयात्पूर्णां विसृजेच्च सदाशिवम् ॥६६९॥
ततो विशुद्धमात्मानं शरच्चन्द्रमिवोदितम्।
संहारमुद्रया रौद्र्या संयोज्य गुरुरात्मनि ॥ ९७० ॥
कुर्वीत शिष्यदेहस्थमुद्धृत्योद्भवमुद्रया[1]।
दध्यादाप्यायनायास्य मस्तकेऽर्घाम्बुबिन्दुकम् ॥९७१॥
क्षमयित्वा महाभागं पितरौ विसृजेद्यथा।
खेदितौ शिष्यदीक्षायां यन्मया पितरौ युवाम् ॥९७२॥
कारुण्यात्क्षमयित्वा मे व्रजतं स्थानमात्मनः।
शिखामन्त्रितकर्तर्या बोधशक्तिस्वरूपिणीम् ॥९७३॥
शिखां छिन्द्याच्छिवास्त्रेण शिष्यस्य चतुरङ्गुलाम्।
ओंहूं शिखायै हूं फट्।
स्रुचि तां घृतपूर्णायां गोविङ्गोलकमध्यगाम् ॥९७४॥
संनिधायास्त्रमन्त्रेण हूंफडन्तेन होमयेत्।
ओंओं हः अस्त्राय फट्।

---

१ संज्ञया ख. ग.

प्रक्षाल्य स्रुक्स्रुवौ शिष्यं संस्नाप्याचम्य च स्वयम् ॥६७५
योजनिकार्थमात्मानमस्त्रमंत्रेण ताडयेत् ।
वियोज्याकृष्य संगृह्य पूर्ववद्द्वादशान्ततः ॥६७६॥
आत्मीयहृद्याम्भोजकर्णिकायां निवेशयेत् ।
पूरितां स्रुचमाज्येन निहिताधोमुखं स्रुवाम् ॥ ६७७ ॥
नित्योक्तविधिनादाय शंखसंनिभमुद्रया ।
प्रसारितशिरोग्रीवो नादोच्चारानुसारतः ॥६७८॥
समदृष्टिः स्थिरः शान्तः परभावसमन्वितः ।
कुण्डमण्डलवह्निभ्यः शिष्यादपि निजात्मनः ॥६७९॥
गृहीत्वा षड्विधाध्वानं स्रुगग्रे प्राणनाडिगम् ।
संचिन्त्य विषुवं ध्यात्वा क्रमशः सप्तधा यथा ॥६८०॥
प्रथमं प्राणसंयोगस्वरूपमपरं पुनः ।
हृदयादिक्रमोच्चारविशिष्टं मन्त्रसंज्ञितम् ॥ ६८१ ॥
सुषुम्नानुगतं नादस्वरूपं तु तृतीयकम् ।
सप्तमे कारणत्यागात्प्रशान्तविषुवे लयः ॥ ६८२ ॥
शक्तिनादोर्ध्वसंचारस्तच्छक्तिविषुवं मतम् ।
प्राणस्य निखिलस्यापि शक्तिप्रामाण्यवर्जितः ॥६८३॥
तत्कालविषवं षष्ठं शक्त्यतीतं तु सप्तमम् ।
तदेतद्योजनास्थानं विषुवत्तत्त्वसंज्ञितम् ॥ ६८४ ॥
पूरकं कुम्भकं कृत्वा व्यादाय वदनं मनाक् ।
शनैरुदीरयन्मूलं कृत्वा शिष्यात्मनो लयम् ॥६८५॥

फट्कारं तडिदाकारषडध्वप्राणरूपिणि ॥६८६॥
फट्कारं परतो नाभेर्वितस्तिं प्राणसंस्थितम् ।
ततः परमकारं तु हृदयाच्चतुरंगुलम् ॥६८७॥
उकारं वाचकं विष्णोस्ततोऽष्टाङ्गुलकण्ठगम् ।
चतुरङ्गुलतालुस्थमकारं रुद्रवाचकम् ॥६८८॥
तद्वल्ललाटमध्यस्थं बिन्दुमीश्वरवाचकम् ।
नादं सदाशिवं देवं ब्रह्मरन्ध्रावसानगम् ॥६८६॥
शक्तिं च ब्रह्मरन्ध्रस्थां त्यजेदित्थमनुक्रमात् ।
दिव्यं पिपीलिकास्पर्शं तस्मिन्नेवाऽनुभूय च ॥६६०॥
द्वादशान्ते परे तत्त्वे परमानन्दलक्षणे ।
भावशून्ये मनोऽतीते शिवे नित्यगुणोदये ॥६६१॥
विलीयमानमेतस्मिञ्शिष्याऽऽत्मानं विभावयेत् ।
विमुञ्चन् सर्पिषो धारां ज्वालान्ते तु शिवे परे ॥६६२॥
योजनिकास्थिरत्वाय वौषडन्ते शिवाणुना ।
दत्त्वा पूर्णां विधानेन गुणापादानमाचरेत् ॥६६३॥

ॐ हां आत्मन् सर्वज्ञो भव स्वाहा । ॐ हीं आत्मन् नित्यतृप्तो भव स्वाहा । ॐ हूं आत्मन् अनादिबोधो भव स्वाहा । ॐ हैं आत्मन् स्वतन्त्रो भव स्वाहा। ॐ हौं आत्मन् अलुप्तशक्तिर्भव स्वाहा ! ॐ हः आत्मन् अनन्तशक्तिर्भव स्वाहा ।

इत्थं षड्गुणमात्मानं गृहीत्वा परमाक्षरात् ।
विधिना भावनोपेतः शिष्यदेहे नियोजयेत् ॥६६४॥

तीव्राणुशक्तिसंघातजनितश्रमशान्तये ।
शिष्यमूर्धनि विन्यस्य दद्यादमृतबिन्दुकम् ॥९९५॥
प्राणमध्येशकुम्भादीन् शिवान् दक्षिणमण्डले ।
सौम्यवक्त्रं व्यवस्थाप्य शिष्यं दक्षिणमात्मनः ॥९९६॥
त्वयैवानुगृहीतोऽयं मूर्तिमास्थाय मामकीम् ।
देवे वह्नौ गुरौ तन्त्रे भक्तिं नाथाऽस्य वर्धय ॥९९७॥
इति विज्ञाप्य देवेशं प्रणम्य च गुरुः स्वयम् ।
श्रेयस्तवास्त्विति ब्रूयादाशिषः सम्यगादरात् ॥९९८॥
ततः परमया भक्त्या दत्त्वा देवेऽष्टपुष्पिकाम् ।
पुत्रकं शिवकुम्भेन संस्नाप्य विसृजेन्मखम् ॥९९९॥
आदौ शक्तिस्ततस्तत्त्वं वागीशीयोन्यनेकधा ।
शिष्यस्य चेतनादानं योजनं सर्वयोनिषु ॥१०००॥
गर्भजन्म तथैश्वर्यं तद्भोगापादानं तथा ।
लयो निष्कृतिविश्लेषौ मलकर्मवियोजनम् ॥१००१॥
पाशच्छेदोऽपि पूर्णा च कारणाय समर्पणम् ।
उद्धारो ग्रहणं चैक्यं शिष्यदेहनियोजनम् ॥१००२॥
विसर्जनं च वागीश्याः शुद्धतत्त्वावलोकनम् ।
अष्टादश च संस्काराः पशोरेते विमुक्तये ॥१००३॥
तत्त्वे तत्त्वे विधातव्या गुरुणा तत्त्ववेदिना ।
श्रीमत्सोमशिवाख्येन कृता शिष्यहितैषिणा ॥१००४॥
कर्मकाण्डक्रमावल्यां दीक्षा निर्वाणचोदिता ।

इति निर्वाणदीक्षाविधिः ॥

अथ त्रितत्त्वदीक्षाविधिः

अथ त्रितत्त्वदीक्षायाः स्वरूपमभिधीयते ।
यागालयगतं कर्म कुर्वीतात्रापि पूर्ववत् ॥१००५॥
आत्मकुम्भशिवज्योतिः शिष्यदेहेष्वक्रमात्
त्रितत्त्वन्यासमारभ्य शिवाज्ञान्तां क्रियां स्मरेत् ॥१००६॥
शिष्यं प्रवेश्य होमान्तं मन्त्राणां दीपनादिकम् ।
विधाय पूर्ववत्सर्वं कृत्वा सूत्रावलम्बनम् ॥१००७॥
शक्तिं शिरसि शिष्यस्य संपूज्यादाय मुद्रया
विधिना योजयेत्सूत्रे यथा हूंशक्तये नमः ॥१००८॥
ततोऽवगुण्ठनं तस्यास्तर्पणं च विधानतः
कुर्यात्षडध्वविन्यासं यथा पूर्वमुदाहृतम् ॥१००९॥
शिष्यं प्रोक्षितमाताड्य संप्रविश्य नियोज्य च
समाकृष्य विधानेन शक्तिसूत्रे नियोजयेत् ॥१०१०॥
ॐ हां आत्मने नमः ।
विधाय मूर्तिविन्यासं कृत्वार्चातर्पणादिकम् ।
पूर्वोक्तेन विधानेन शिवतत्त्वं विलोकयेत् ॥१०११॥
ॐ हूं शिवतत्त्वाय नमः ।
संताड्य हूं फडन्तेन गृहीत्वा हृत्पुटेन च
अनेनैव नमोऽन्तेन शिरःसूत्रे नियोजयेत् ॥१०१२॥
शिवतत्त्वं समभ्यर्च्य कवचेनावगुण्ठयेत् ।

संतर्प्योक्तविधानेन विद्यातत्त्वं विलोकयेत् ॥१०१३॥

ॐ ह्रीं विद्यातत्त्वाय नमः ।

संताड्याऽदाय संस्नाप्य पूजयित्वावगुण्ठयेत् ।
संतर्प्य च यथापूर्वमात्मतत्त्वं विलोकयेत् ॥१०१४॥

ॐ ह्रां आत्मतत्त्वाय नमः ।

पूर्वोक्तविधिनात्रापि कृत्वा संताडनादिकम् ।
तर्पणाय पुनर्दद्यादाहुतीनां त्रयं त्रयम् ॥१०१५॥
शिवतत्त्वादिकान्भागान् हूं फडन्तेन दीपयेत्
हृल्ललाटान्तयोः सूत्रं संप्रोक्ष्य कुङ्कुमादिना ॥१०१६॥

ॐ हूं हूं शिवतत्त्वाय हूं हूं फट् । इत्यादिदीपनम्

सूत्रेऽभ्यर्च्य शिवं साङ्गं छित्वा पाशाननुक्रमात् ।
कुर्वीत हृत्पुटैर्बीजैस्तेषां ग्रहणबन्धने ॥१०१७॥
शिष्यस्य दक्षिणे स्कन्धे तत्सूत्रं विनिवेदयेत् ।
कृत्वा होमं षडङ्गेन दद्यात् पूर्णां शिवाणुना ॥१०१८॥
सत्पात्रसंपुटैर्मन्त्रैः सूत्रं संपातसंस्कृतम् ।
रक्षार्थं शिवकुम्भाय विधिना विनिवेदयेत् ॥१०१९॥
पञ्चगव्यं चरुं दत्त्वा पूर्ववद्बलिपूर्वकम् ।
दन्तकाष्ठं परीक्षार्थं कृत्वा प्रस्वापयेच्छिशुम् ॥१०२०॥
क्रियासमर्पणं कृत्वा चरुकं प्राश्य पूर्ववत् ।
स्मरन् दीक्षाक्रमं स्वप्याद्विधिरित्यधिवासने ॥१०२१॥
प्रातर्निर्वर्तिताशेषनित्यनैमित्तिकक्रियः ।

प्रवेश्य पूर्ववच्छिष्यं कुण्डपार्श्वे निवेशयेत ॥१०२२॥
विधाय नाडिसन्धानं संपातं चास्य मस्तके ।
शिखायां सूत्रमाबद्धय पुनस्तदुपवेशयेत ॥१०२३॥
आत्मतत्त्वं विलोकेत व्यापकं षड्विधानन:(ध्वन:) ।
हृदन्तं व्याप्य शिष्यस्य ताडयेदादधीत च ॥१०२४॥
मनसा निक्षिपेद्वह्नौ तर्पयेदपि पूर्ववत् ।
ततो ब्राह्मणमावाह्य यजेद्विज्ञापयेदिति ॥१०२५॥
ताडयित्वास्त्रपुष्पेण हृत्सूत्रे शिष्यचेतनाम् ।
प्रवेशनादिकं कृत्वा गुरुरात्मनि योजयेत् ॥१०२६॥
द्वादशान्तान्तमादाय देवीगर्भे नियोजयेत् ।
संपूज्य तर्पयित्वा च संस्कारविधिमाचरेत् ॥१०२७॥
जन्माधिकारभोगेषु लये स्रोतोविशुद्धये ।
मायीयाणवनिष्कृत्यै शिवेनाङ्गवता यजेत् ॥१०२८॥
मलशक्तितिरोधाने भाविकर्मनिरोहितौ ।
पाशविश्लेषणार्थं च क्रमादस्त्रेण होमयेत् ॥१०२९॥
सप्तास्त्रजप्तकर्तर्या पाशं हुत्वोयुधोणुना ।
छित्त्वा विमृद्य विन्यस्येत्स्त्रुवाग्रे वर्तुलीकृतम् ॥१०३०॥
ॐ हां आत्मतत्त्वाय हः हूं फट् ।
दहेच्च तमनेनैव पाशाङ्कुरनिवृत्तये
प्रायश्चित्ताय चास्त्रेण हुत्वा शुल्कं समर्पयेत् ॥१०३१॥
ॐ हां ब्रह्मन् गन्धरसरूपस्पर्शशब्दान्शुल्कं गृहाण स्वाहा ।
विज्ञाप्याऽप्रतिबन्धाय विसृजेत्कमलासनम् ॥१०३२॥

आत्मन्यादाय चैतन्यं मखसूत्रं नियोजयेत् ।
अर्घाम्बुबिन्दु मारोप्य शिष्यशीर्षे सुधोपमम् ॥१०३३॥
प्रदद्याद्विधिना पूर्णामात्मतत्त्वं विशोधितम् ।
ॐहांहीं आत्मतत्त्वविद्यातत्त्वाभ्यां नमः ।
शुद्धाऽशुद्धानुसंधानं ह्रस्वदीर्घप्रयोगतः ॥१०३४॥
विधाय निजमन्त्रेण विद्यातत्त्वं विलोकयेत् ।
ललाटपदपर्यन्तं विद्यातत्त्वं शिशोस्ततः ॥१०३५॥
षडध्वव्यापकं ध्यात्वा विदध्यात्ताडनादिकम् ।
अथ माधवमाहूय यजेद्विज्ञापयेदिति ॥१०३६॥
पूर्ववत्मखसूत्रस्थं ताडयेच्छिष्यचेतनम् ।
प्रवेशनादिकं कृत्वा गुरुरात्मनि योजयेत् ॥१०३७॥
द्वादशान्ते तमानीय देवीगर्भे नियोजयेत् ।
जन्माधिकारभोगाद्यं कुर्यान्मूलेन पूर्ववत् ॥१०३८॥
आयुधेन मलादीनां तिरोधानं समाचरेत् ।
पाशं संछिद्य कर्तर्या पूर्वोक्तविधिना दहेत् ॥१०३९॥
प्रायश्चित्तं तथा हुत्वा विष्णोः शुल्कं समर्पयेत् ।
ॐ हां विष्णो बुद्ध्यऽहङ्काररूपं शुल्कं गृहाण स्वाहा ।
विज्ञप्योप्रतिबन्धाय विसृज्य गरुडध्वजम् ॥१०४०॥
आत्मन्यादाय चैतन्यं शिरः सूत्रे निवेशयेत् ।
अर्घ्याम्बुबिन्दुमारोप्य शिष्यशीर्षे सुधोपमम् ॥१०४१॥
ददीत विधिना पूर्णां विद्यातत्त्वं विशोधितम् ।
संधायानेन तत्त्वेन शिवतत्त्वं विलोकयेत् ॥१०४२॥

शिखान्तव्यापिशिष्यस्य व्यापकं षड्विधाध्वनः ।
संताड्य तत्रमादाय वह्नौ विक्षिप्य तर्पयेत् ॥१०४३॥
शिवस्यावाहनं पूजां तर्पणं विधिना चरेत् ।
रुद्र तत्राधिकारेऽस्मिन् मुमुक्षुं दीक्षयाम्यहम् ॥१०४४॥
भव त्वमनुकूलोऽस्य रुद्रं विज्ञापयेदिति
प्रविश्यादाय चैतन्यं कृत्वात्मस्थं विधानतः ॥१०४५॥
निःसार्य द्वादशान्तेन देवीगर्भे निवेशयेत् ।
जन्मादिनिष्कृतिं यावन्मूलेनाङ्गवताऽचरेत् ॥१०४६॥
आयुधेन मलादीनां तिरोधानादि साधयेत् ।
पाशस्य च्छेदनं दाहं प्रायश्चित्तं च पूर्ववत् ॥१०४७॥
विधाय रुद्रमभ्यर्च्य कुर्याच्छुल्कसमर्पणम् ।
ॐ हां रुद्र मनोबिन्दुरूपं शुल्कं गृहाण स्वाहा ।
संतर्प्य विसृजेदीशं निवेश्याऽत्मानमात्मनि ॥१०४८॥
रेचकेनातिसंशुद्धं शिरःसूत्रे नियोजयेत् ।
शिरस्यार्घाम्बुबिन्दुं च दद्यात्पूर्णां विधानतः ॥१०४९॥
विशुद्धं शिवतत्त्वं च पूर्वोक्तं विस्तरं स्मरेत् ।
ततः ॐ हूं शिखायै हूं फट् । इत्येवं प्रजप्तया
कर्तर्या शिवशस्त्रेण संछिन्द्यात्पूर्ववच्छिखाम् ॥१०५०॥
वेष्टितां गोमयेनैनां सघृतायां स्रुचि स्थिताम् ।
शिखां हुत्वा विधानेन स्रुक्स्रुवौ क्षालयेज्जलैः ॥१०५१॥
स्वयं मृद्भस्मना स्नात्वा स्नपयेच्छिष्यमम्बुभिः ।
योजनाय तदात्मानं पुनरात्मनि योजयेत् ॥१०५२॥

पूर्वोक्तविधिनादाय सुक्स्रुवावूर्ध्वविग्रहौ ।
ब्रह्मादिकारणत्यागक्रमान्मूलमुदीरयन् ॥१०५३॥
शिवोऽहमित्यहङ्कारी बोधरूपे परे शिवे ।
विमुञ्चन् सर्पिषो धारां शिष्यात्मानं वियोजयेत् ॥१०५४॥
षड्गुणापादनं कृत्वा शिष्यं संस्नाप्य तद्बहिः ।
वार्धन्या कलशेनाथ दीक्षेयं तु त्रितत्त्विका ॥१०५५॥
अथैकतत्त्विकी दीक्षा लघुत्वादुपदिश्यते ।
सूत्रबन्धादि कुर्वीत यथायोगं निजाणुना ॥१०५६॥
कालाग्न्यादिशिवान्तानि तत्त्वानि प्रविभावयेत् ।
शिवतत्त्वे समग्राणि सूत्रे मणिगणा इव ॥१०५७।
आवाह्य शिवतत्त्वादिगर्भाधानादि पूर्ववत् ।
मूलेन किंतु कुर्वीत सर्वशुल्कसमर्पणम् ॥१०५८॥
प्रदद्दीत ततः पूर्णां तत्त्वव्रातोपगर्भिताम् ।
एकयैव यथा शिष्यो निर्वाणमधिगच्छति ॥१०५९॥
योजनाय शिवे चान्यां स्थिरत्वापादनाय च ।
दत्त्वा पूर्णां प्रकुर्वीत शिवकुम्भाभिषेचनम् ॥१०६०॥

दीक्षात्रयं त्रिनयनाहितमानसेन
लोकत्रये प्रथितकीर्तिवितानकेन ।
संसारसागरनिमज्जदनल्पजन्तू-
नुद्धर्तुमाशु रचितं शशिशङ्करेण ॥१०६१॥

चन्दनाच्छुरितान्मूलपल्लवास्यान्सुलक्षणान् ।
पवित्रतोयसंपूर्णान्वस्त्रालङ्कारभूषितान् ॥१०६२॥
तेषु क्षारं दधि क्षीरोदध्युदं घृतसागरम् ।
इक्षुकादम्बरीस्वादुगर्भोदानष्टसागरान् ॥१०६३॥
निवेशयेद्यथासंख्यमष्टौ विद्येश्वरानथ ।
एकं शिखण्डिनं रुद्रं श्रीकण्ठं तु द्वितीयकम् ॥१०६४॥
त्रिमूर्तिमेकरुद्राख्यमेकनेत्रं शिवोत्तमम् ।
सप्तमं सूक्ष्मनामानमनन्तं रुद्रमष्टमम् ॥१०६५॥
मध्ये शिवं समुद्रं च शिवमन्त्रं च विन्यसेत् ।
अथवा पञ्चभिः कुम्भैर्निवृत्त्यादिकलान्वितैः ॥१०६६॥
शिवतत्त्वपूजितैर्मूलमन्त्रेणाष्टाभिमन्त्रितैः ।
अथवैकेन कुम्भेन तादृशेनाभिषेचनम् ॥१०६७॥
पश्चिमोत्तरयाम्यासु पूर्वस्यां च निवेशयेत् ।
क्रमात्कुम्भांस्ततस्तेषु समुद्राणां द्वयं द्वयम् ॥१०६८॥
तथा विद्येश्वराणां च द्वितयं द्वितयं क्रमात् ।
ऐशान्यां पञ्चमं न्यस्य शिवमन्त्रं शिवाम्बुभिः ॥१०६९॥
एकत्र कलशे पत्रपुटे वाष्टौ पयोनिधीन् ।
तथा विद्येश्वरानष्टौ सर्वत्राङ्गयुतं शिवम् ॥१०७०॥
यागालयदिगीशस्य रचिते स्नानमण्डपे ।
कुर्यात्करद्वयायामां वेदिमष्टाङ्गुलोच्छ्रयाम् ॥१०७१॥
श्रीपर्णाद्यासने तत्र विन्यस्यानन्तमासनम् ।
शिष्यं निवेश्य पूर्वास्यं सकलीकृत्य पूजयेत् ॥१०७२॥

१ 'पूर्वस्यां' ख.।

काञ्चिकोदनमृद्भस्मदूर्वागोमयगोलकैः ।
सिद्धार्थदधितोयैश्च कुर्यान्निर्भर्त्सनं ततः ॥१०७३॥
क्षारोदधिक्रमेणाथ हृदा विघ्नेशशम्बरैः ।
कलशैः स्नापयेच्छिष्यं सुधाधारणयान्वितः ॥१०७४॥
परिधाप्य सिते वस्त्रे निवेश्य शिवदक्षिणे ।
पूर्वोदितासने शिष्यं पुनः पूर्ववदाचरेत् ॥१०७५॥
उष्णीषं मुकुटं छत्रं पादुकां चामरादि च ।
गजाश्वशिविकादीनि करणीं कर्तरीं खटीम् ॥१०७६॥
अक्षमालां च दर्भांश्च स्रुक्स्रुवौ पुस्तकादि च ।
अधिकारं गुरुस्तस्मै शिष्याय विनिवेदयेत् ॥१०७७॥
दीक्षाव्याख्याप्रतिष्ठाद्यं ज्ञात्वाद्यप्रभृति त्वया ।
सुपरीक्ष्य विधातव्यमाज्ञां संश्रावयेदिति ॥१०७८॥
अभिवाद्य ततः शिष्यं प्रणिपत्य महेश्वरम् ।
विघ्नजालापनोदार्थं कुर्याद्विज्ञापनं यथा ॥१०७९॥
अभिषेकार्थमादिष्टस्त्वयाहं गुरुमूर्तिना ।
संहितापारगः सोऽयमभिषिक्तो मया शिव ॥१०८०॥
तृप्तये मन्त्रचक्रस्य पञ्चपञ्चाहुतीर्यजेत् ।
दद्यात्पूर्णां ततः शिष्यं स्थापयेन्निजदक्षिणे ॥१०८१॥
शिष्यदक्षिणपाणिस्था अङ्गुष्ठाद्यङ्गुलीः क्रमात् ।
लाञ्छयेद्परत्वाय दग्धदर्भाङ्गशम्बरैः ॥१०८२॥
कुसुमानि करे दत्त्वा प्रणामं कारयेदमुम् ।
कुम्भे शिवेऽनलेऽमुष्मिंस्ततस्तत्कृत्यमादिशेत ॥१०८३॥

१ 'अर्चयेत्' क. ।

अनुग्राह्यस्त्वया शिष्यः शास्त्रदृष्टेन कर्मणा।
श्रोतव्यं च शिवज्ञानं श्रावणीयं तदर्थिनाम् ॥१०८४॥
संवत्सरोषिते शिष्ये दीक्षां निर्वर्तयेद्बुधः।
अल्पमह्नि जपं कुर्यात्स्वल्पमग्नौ च होमयेत् ॥१०८५॥
इत्याचार्याभिषेकोऽयं रचितः सोमशंभुना।
साधकस्याभिषेके तु निवृत्त्यादिकलात्रयम् ॥१०८६॥
मुमुक्षोरिव संशोध्य शान्त्यतीतां विशोधयेत्।
ततः सदाशिवं ध्यात्वा मूलमन्त्रेण पूर्णया ॥१०८७॥
शान्तौ संयोज्य कुर्वीत गुणापादानमष्टधा।

ॐ हूं आत्मन् अणिमा ते भवतु स्वाहा। ॐ हूं आत्मन् लघिमा ते भवतु स्वाहा। ॐ हूं आत्मन् महिमा ते भवतु स्वाहा। ॐ हूं आत्मन् प्राप्तिस्ते भवतु स्वाहा। ॐ हूं आत्मन् प्राकाम्यं ते भवतु स्वाहा। ॐ हूं आत्मन् ईशित्वं ते भवतु स्वाहा। ॐ हूं आत्मन् वशित्वं ते भवतु स्वाहा। ॐ हूं आत्मन् यत्रकामावसायिता ते भवतु स्वाहा॥

पूर्ववद्योजनां कृत्वा पञ्चभिः कलशैस्ततः ॥१०८८॥
कृतपञ्चकलान्यासैः साध्यशम्बरपूजितैः।
मूलसाष्टशतालब्धैरभिषिच्य यथाक्रमम् ॥१०८९॥
पर्यन्ते शान्तिकुम्भेन पञ्चमेनाभिषेचयेत्।
विन्यस्याष्टसमुद्रैर्वा साध्याणुशतमन्त्रितैः ॥१०९०॥
पूर्वोक्तैरष्टभिः कुम्भै रेचकोद्भवमुद्रया।
उदङ्मुखासनस्थोऽपि चित्ते कृत्वाणिमादिकम् ॥१०९१॥

ददीत साध्यमन्त्रेण साधकस्याभिषेचनम् ।
निवेश्य दक्षिणे शंभोः सकलीकृत्य पूर्ववत् ॥१०९२॥
उष्णीषकर्तरीहीनमधिकारं समर्पयेत् ।
साध्यमन्त्रं समुच्चार्य प्रणवादि तु दीपितम् ॥१०९३॥
रेचकोद्भवया दद्यात्पुष्पादियुतमञ्जलौ ।
महाप्रसाद इत्युक्त्वा शरदिन्दुसमुज्ज्वलम् ॥१०९४॥
पूरकेण हृदम्भोजे साधकस्तं निवेशयेत् ।
संतर्प्य पावकं भक्त्या साध्यशम्बरसंहिताम् ॥१०९५॥
दक्षिणे मण्डलादीनि पद्मे साध्याणुमर्चयेत् ।
गुरुप्रसादितानुज्ञो विहिताष्टाङ्गसन्नतिः ॥१०९६॥
पुण्यकाले मुहूर्ते च मन्त्राराधनमाचरेत् ।
अणिमादिप्रसिद्ध्यर्थं घृतस्य पयसोऽथवा ॥१०९७॥
गुग्गुलैश्चैव साहस्रं शतं वा होममाचरेत् ।
आगमार्थाविसंवादि पारम्पर्यक्रमागतम् । ॥१०९८॥
श्रीसोमशंभुनाकारि साधकस्याभिषेचनम् ।
नृपतीनां नराणां च वन्ध्यादीनां च योषिताम् ॥१०९९॥
महाविघ्नाभिभूतानां सद्यः शान्तिकरं परम् ।
लक्ष्मीविजयसौभाग्यधर्मादिषु फलप्रदम् ॥११००॥
आगमा[र्था] विसंवादि लिख्यतेऽस्त्राभिषेचनम् ।

ओं श्लीं पशु हूं फट् नमः हृदयाय हूं फट् नमः। ओं श्लीं शिरसे हूं फट् नमः ।ओं पं श्लीं शिखायै हूं फट् नमः। ओं शुं कवचाय हूं फट् नमः। ओं हूं फट् अस्त्राय हूं फट् नमः॥

सकृन्मन्त्रं समुच्चार्य शरीरं विन्यसेद्बुधः ।
अङ्गानि विन्यसेत्पश्चादोङ्कारादिनमोन्तकम् ॥११०१॥
बहिरष्टदलं पद्मं ध्यात्वास्मिन्नस्त्रमर्चयेत् ।
मण्डले चतुरश्रे वा रजोराजीवराजिते ॥११०२॥
प्रणवासनमारूढं दशबाहुं महाबलम् ।
पञ्चास्यं दशकर्णं च प्रतिवक्त्रं त्रिलोचनम् ॥११०३॥
दंष्ट्राकरालमत्युग्रं महानादं सुदुर्जयम् ।
लेलिहानं दुराधर्षं सूर्यकोट्ययुतप्रभम् ॥११०४॥
इत्थं पाशुपतं शस्त्रं विघ्नसंघातमर्दनम् ।
कर्णिकायां समासीनं पूजयेत्परमेश्वरम् ॥११०५॥
बिन्दुनादविमुक्तेन विदध्यान्मारणादिकम् ।
युक्तेन बिन्दुनादाभ्यां भुक्तिमुक्ती च साधयेत् ॥११०६॥
प्रणवं तैजसे पत्रे श्लींकारं शाङ्करे दले ।
नैरृते तु तृतीयं तु चतुर्थं वायुगोचरे ॥११०७॥
हूंकारं चैव नेत्रेषु हूंफडिन्द्रदले स्थितम् ।
इत्थं विन्यस्य संपूज्य विधिना होममाचरेत् ॥११०८॥
नवात्माहुतिभिस्तत्र नवभिः संस्कृते ऽनले ।
त्रिमधुनास्त्रराजस्य यजेदष्टाधिकं शतम् ॥११०९॥
बलिं दत्त्वा विधानेन कलशं वाभि(रि)पूरितम् ।
पूजयेल्लक्षणोपेतं पूर्ववत्प्रणवासने ॥१११०॥
पूजयेदस्त्रमन्त्रेण शतेनाष्टाधिकेन तम् ।
अनेन स्नापयेच्छिष्यं ध्यात्वा रूपं यथोदितम् ॥११११॥

मङ्गलैर्वेदनिर्घोषैर्भेरीतूर्याङ्गनिःस्वनैः ।
दद्याद्वस्त्राक्षतादीनि गुरुराशीःपुरःसरम् ॥१११२॥
इत्थमस्त्राभिषेकोऽपि महाविघ्नान्तकारकः ।
हिताय कथितः पुंसां श्रीमत्सोमाख्यशंभुना ॥१११३॥
इत्यभिषेकविधिः । अथ व्रतसमुद्धारः ।
अथ पञ्चसु पदेषु सद्योजातादिपञ्चकम् ।
पूजयेदनुरूपेण शैवानां व्रतमुक्तये ॥१११४॥
व्रताङ्गसंख्यया वह्नौ यजेदपि शतंशतम् ।
ब्रह्मभिर्वा हृदाद्यङ्गैरन्तेवासिन्यपोषिते ॥१११५॥
तस्य संयमकौपीनदण्डभस्मजटादयः ।
समर्पयेद्व्रताङ्गानि सद्योजातादिषु क्रमात् ॥१११६॥
चण्डनाथमथाभ्यर्च्य व्रताङ्गानि विसृज्य च ।
विधिनानेन पानीयप्रवाहे च प्रवाहयेत् ॥१११७॥
नवं वस्त्रयुगं दत्त्वा तं ब्रूयादिति देशिकः ।
अनुरूपां कुलीनां च परिणेष्यसि कन्यकाम् ॥१११८॥
शैवानां व्रतसंत्यागः संक्षेपेण निदर्शितः ।
अन्येषां व्रतयुक्तानां प्रसङ्गादभिधीयते ॥१११९॥
बुद्धितत्त्वे स्थिता बौद्धा जैमिना गुणसप्तके ।
वेदान्तज्ञाश्च तद्योनौ पुरुषे भगवन्मुखाः ॥११२०॥
पाशुपतास्तु मायायां विद्यायां तु महार्हताः ।
बौद्धादिलिङ्गिनामेषां मुक्तिस्थानान्यनुक्रमात् ॥११२१॥

त्रिरात्रं पञ्चरात्रं वा लिंगिनामुपवासिनाम्।
प्रायश्चित्तविशुद्धानां स्थितानां मण्डपाद्बहिः ॥११२२॥
संपूज्य पशुभर्तारं विस्तरेण यथा पुरा।
अमीषां दैशिकः कुर्याल्लिङ्गोद्धारं यथाविधि॥ ११२३ ॥
बुद्ध्यादिभूमिपर्यन्तं तत्त्वव्रातं विभावयेत्।
उपस्थाप्य स्वसंज्ञाभिरेकैकैव प्रयोजयेत् ॥ ११२४॥
बहिस्थानामथैतेषां नाडीसन्धानपूर्वकम्।
कृत्वा ताडनविश्लेषमाकर्षेत्स्वात्मनि स्थितम् ॥ ११२५॥
स्वाहान्तेन च मूलेन तद्योगं जातवेदसि।
इष्टदेवार्चनात्पुण्यफलध्वंसाय होमयेत् ॥११२६॥
अस्त्रस्याष्टौ सहस्राणि लिङ्गिनं लिङ्गिनं प्रति।
पञ्च पञ्च च मूलेन प्रतितत्त्वविमुक्तये ॥११२७॥
बुद्ध्यादिभ्यो धरान्तेभ्यः समुद्धृत्य नियोजयेत्।
पूर्वजातौ तदाचारतद्योगस्थितयेऽधुना ॥ ११२८॥
पूर्णान्तं मूलमन्त्रेण यजेदष्टोत्तरं शतम्।
तद्वत्तोये व्रताङ्गानि क्षिप्त्वा कुर्याद्गृहस्थितिम् ॥११२९॥
अथवाष्टदलाम्भोजे शिवाशादिप्रदक्षिणैः।
शवर्गादीनवर्गांतान्न्यसेद्वर्गाननुक्रमात् ॥ ११३० ॥
हूंकारमक्षरं शम्भुं ब्रह्माङ्गैः सहितं स्वरैः।
संपूज्य कर्णिकामध्ये पूजयेत्तं हुताशने ॥११३१॥
वर्गाणां तर्पणं कृत्वा शिवाज्ञातः शवर्गके।
उपस्थाप्यार्चिते तेषां चैतन्यं न्यस्य पूर्ववत् ॥११३२॥

पूर्णावसानकं हुत्वा षडङ्गेन ततः शतम्।
वह्नेर्वियोज्य चैतन्यं तच्छरीरे निवेशयेत् ॥ ११३३ ॥
एवं यशादिवर्गेषु कृत्वा संयोजनादिकम्।
व्रताङ्गानि समादाय गम्भीरे पयसि क्षिपेत् ॥११३४॥
ततो वस्त्रयुगं दत्त्वा गार्हस्थ्ये विनियोजयेत्।
तेषां कुर्वीत वा दीक्षां भक्तानामनुकम्पया ॥११३५॥
विसृज्य स्थण्डिलेशाग्नीन्विधिना शोधयेद्ध्रुवम्।
इति व्रतसद्धारो रचितः सोमशंभुना ॥११३६॥
इति व्रतसमुद्धारः। अथान्त्येष्टिविधिः—
अथान्त्येष्टिं प्रवक्ष्यामि यथाम्नायं समासतः।
साधकाचार्यपुत्राणां मृतस्यैकस्य कस्यचित् ॥११३७॥
अन्त्येष्टिरुच्यतेऽन्यस्य तत्त्वशुद्धिविवर्जिता।
कृते हरित्वंशाद्यैर्वेष्टिते रक्तवाससा ॥११३८॥
पुष्पमालीपताकाढ्ये शंखतूर्यरवाकुले।
विमाने स्वर्गसोपाने समारोप्य शवं नयेत् ॥११३९॥
दीक्षितैस्तुल्यजातीयैरपसव्योपवीतकैः।
जपद्भिःशस्त्रमन्यैर्वा धारयेच्च जलान्तिके ॥११४
सुविशुद्धे महीपृष्ठे मृतं दक्षिणमस्तकम्।
कृत्वा कुण्डं विधानेन चतुरश्रैकमेखलम् ॥११४१
षडङ्गुलोच्छ्रितं वायोस्तन्मृदा मण्डलं दिशि

कुण्डदक्षिणतः कुर्याच्चितावास्तुं चतुष्करम् ॥११४२॥
हस्तद्वितयविस्तीर्णमष्टाङ्गुलगभीरकम् ।
कुण्डादित्रयमप्येतल्लिम्पेद्गोमयवारिणा ॥११४३॥
अथ स्नातः कृतन्यासो गृहीतास्त्रालुको गुरुः ।
प्रदक्षिणक्रमाद्गत्वा स्थण्डिलान्तमुदङ्मुखः ॥११४४॥
विपरीतकृतन्यासो हेतिमन्त्रेण रक्षितः ।
कृतान्तर्यजनो मौनी मन्त्रयित्वास्त्रवार्धनीम् ॥११४५॥
द्रव्यं तदम्भसा सिञ्चेदात्मानं योजयेत्ततः ।
प्रक्षिप्य विकिरव्रातं वार्धन्या सह सेतवे[1] ॥११४६॥
समाहृत्य विधानेन चितावास्तुं विवर्तयेत् ।
पञ्चभागे कृते क्षेत्रे पञ्चविंशतिकोष्ठके ॥११४७॥
पृथिव्यादि यथारूपं पञ्चवर्णैर्विभूषितम् ।
दंशरज्ज्वादिसंपन्ने विन्यसेद्वास्तुदेवताः ॥११४८॥
तत्र मध्ये भुवा सार्धं ब्रह्माणं कोष्ठपञ्चके ।
नैर्ऋते वारिणा सार्धं विष्णुं कोष्ठचतुष्टये ॥११४९॥
अग्निकोणे चतुष्कोष्ठे रुद्रं ज्वलनसंयुतम् ।
वायुकोणे चतुष्कोष्ठे वायुना सममीश्वरम् ॥११५०॥
तच्चतुष्के तथैशान्यां गगनं ससदाशिवम् ।
पूर्वादिदिक्षु कोष्ठेषु शक्रादींश्चतुरोऽर्चयेत् ॥११५१॥
निजनाम्ना नमोऽन्तेन स्वाहान्तेन बलिं दिशेत् ।
ओं हां ब्रह्मणे वास्त्वधिपतये नमः इति भूमौ । ओं हां विष्णवे नमः इति जले । ओं हां रुद्राय नम इति वह्नौ । ओं हां ईश्वराय नमः

१ 'हेतवे' ख०

इति वायौ । ओं हां सदाशिवाय नम इत्याकाशे इत्यादयो मन्त्राः

ऐशान्यां दिशि वार्धान्यामिष्ट्वा पाशुपतं चितेः ।
अष्टासु विन्यसेद्दिक्षु लोकपालायुधानि तु ॥११५२॥
ऐश्वर्याद्यासनं दत्त्वा स्थण्डिलाम्भोजमध्यगम् ।
मनोन्मन्यादिवामान्तं शक्तिचक्रं प्रपूजयेत् ॥११५३॥
विकीर्य तिलभस्मादि साङ्गं संपूज्य शङ्करम् ।
प्रक्षिप्य दक्षिणे कुण्डे जनयेत्प्राक्शवानलम् ॥११५४॥
हृदग्नौ पूजयेदीशं हुत्वा पूर्णावसानकम् ।
अप्रदक्षिणमग्न्यादिकोणेषु निखनेत्क्रमात् ॥११५५॥
प्रजप्तानस्त्रमन्त्रेण रक्तसूत्रेण वेष्टितान् ।
ऊर्ध्वमूलानधोऽग्रांश्च शुष्ककाष्ठीयकीलकान् ॥११५६॥
इन्धनैश्चितिमापूर्य सकुशैः कुसुमैस्तिलैः ।
पूजयेदस्त्रराजेन विपरीतपटावृताम्[1] ॥११५७॥
मृतं मृद्गोमयाम्भोभिः संस्नाप्योद्धूल्यमानयेत् ।
दद्याद्यज्ञोपवीतं च पूर्ववर्णानुपेक्षया ॥११५८॥
अथास्त्रधारणाशुद्धे गन्धपुष्पादिपूजिते ।
महाजालप्रयोगेन जीवमादाय विन्यसेत् ॥११५९॥

ओं हूं हां हूं अमुकात्मने नमः।

विद्यादेहे च तद्देहे मस्तके वदने हृदि ।
नाभावधःशरीरे च शान्त्यतीतादिकाः कलाः ॥११६०॥
विद्यातत्त्वं च विन्यस्य शक्तितत्त्वं तथा शिवम् ।
चैतन्यसंनिधानाय मूलेन जुहुयाच्छतम् ॥११६१॥

---

१ 'वृतान्' ख

निवृत्त्यादीन्समादाय युगपद्वा क्रमेण वा ।
अग्नौ संयोज्य संपूज्य शिवस्यावाहनादिकम् ॥११६२॥
कृत्वा ताडनविश्लेषौ जीवस्याकर्षणादिकम् ।
कर्मात्मस्थं च तत्रस्थं दीक्षावत्सर्वमाचरेत् ॥११६३॥
जन्माधिकारं भोगं च लयं स्रोतोविशोधनम् ।
निष्कृतिं च तिरोधानं पशोः पाशविभेदनम् ॥११६४॥
मर्दनं वर्तुलीभावं पाशदाहादिकां क्रियाम् ।
कारणावाहनं तद्वदधिकारसमर्पणम् ॥११६५॥
आत्मोद्धरणकर्मादि कृत्वा गुणविसर्जनम् ।
योजयेद्भावनातीते शिवे चैतन्यमव्यये ॥११६६॥
स्थण्डिलेशं नियोज्याग्नौ शवं दक्षिणमस्तकम् ।
चितावुत्तानमारोप्य पिदधीत समिन्धनैः[1] ॥११६७॥
चितां संदीपयेत्पश्चात्कुण्डमत्र चिताग्निना ।
ज्वलितेऽग्नौ शिरोदेशे पूर्णां सौम्याननो यजेत्॥११६८॥
त्वमग्ने दक्षिणः कालः कालेनैवोपादिताम् ।
गृहाण मन्त्रसंपूर्णां[2] शैवीमेतां महाहुतिम् ॥११७६॥
पठन्नेवं महामन्त्रं दत्त्वा पूर्णां तथान्तिमाम् ।
स्थापयेत्तत्र दीप्तायां स्रुक्स्रुवौ तावधोमुखौ ॥११७०॥
वामांसेऽस्त्रालुमादाय प्रत्यग्धारां प्रदक्षिणम् ।
विमुञ्चन्निक्षिपेत्तत्र यत एव समुद्धृता ॥११७१॥
ततो जलान्तिकं गत्वा पश्चादनवलोकयन् ।
स्नात्वा प्रस्तीर्य सद्दर्भानपसव्यं विधाय च ॥११७२॥

---

१ 'सदिन्धनैः' ख. । २ 'संपूतां' ख. पाठः

ओं हां शुद्धात्मन् ईशानो भव स्वाहा। ओं हां शुद्धात्मन् सदाशिवो भव स्वाहा। ओं हां शुद्धात्मन् शान्तो भव स्वाहा। इति निवापाञ्जलित्रयं दद्यात्।

देशिको बहुरूपस्य पुनः स्नात्वा शतं जपेत्।
द्विगुणं स्कन्धदातारस्ततो गत्वा निजाश्रमम् ॥११७३॥
तत्र देवार्चनं कुर्युस्तमुद्दिश्य तपस्विनम्।
प्रथमेऽह्नि तृतीये वा कुर्यात्सञ्चयनं चितेः ॥११७४॥
कृत्वाथ कर्करीं पूर्णां क्षीरेण पयसोथवा।
तत्र त्रिकर्णाष्टकां दत्त्वा तस्य तां स्थापयेदिति ॥११७५॥
प्रबोधाय विबुद्धानां श्रीमता सोमशंभुना।
कर्मकाण्डक्रमावल्यां कृतोऽन्त्येष्टिविधिक्रमः ॥११७६॥
ततो विधीयते श्राद्धं विसृतकदिनादितः।
प्रतिमासं समं यावदेकोद्दिष्टमिदं भवेत् ॥११७७॥
तिथिषु श्राद्धपर्वेषु श्राद्धं सर्वासु साधयेत्।
षड्दैवतं गृहस्थानां लिङ्गिनां तु त्रिदैवतम् ॥११७८॥
लिङ्गिनो ब्राह्मणाद्याश्च श्राद्धे यः शिवदीक्षितः।
ईशः सदाशिवः शान्तः शिवश्राद्धे तपस्विनः ॥११७९॥
रुद्रश्चानन्तनामा च विश्वेदेवौ स्थितौ द्वयोः।
दीक्षितानाममी देवा रुद्रांशानामतोऽन्यथा ॥११८०॥
तत्र नन्दिमहाकालौ विश्वेदेवौ गणौ द्वयोः।
स्कन्दचण्डगणाधीशा गणास्त्रिषु यथाक्रमम् ॥११८१॥
लौकिके ब्रह्मविष्ण्वीशौ विश्वेदेवौ यमारुणौ।

पञ्चाभावे तु सर्वत्र युज्यते पुषद्वयम् । ॥११८२॥
शिरःस्कन्धविभागेन त्रयमेकत्र कल्पयेत् ।
बाहुमूलविभेदेन विश्वेदेवौ द्वितीयके ॥११८३॥
एकत्र बाहुयुग्मेन सह वा पञ्च कल्पयेत् ।
चतुर्थे सप्तमे चैव नवमे च त्रयोदशे ॥११८४॥
अमावस्यां गयायां च पितृपक्षे प्रतेर्पयेत्[१] ।
अष्टम्यां पर्वशेषेऽपि मातृपक्षे इति श्रुतिः ।११८५॥
निमन्त्रयेत पूर्वेद्युर्यथागौरवमोद्दतः ।
आकारयेंद्दिनेऽन्यस्मिन्नपराह्णे कृतक्रियः ।११८६॥
वेदाश्रमङ्गने प्राच्यां कुर्यान्मण्डलकद्वयम् ।
दक्षिणोत्तरसंस्थानं हस्तमात्रं करान्तरम्[२] ॥११८७॥
प्रतीच्यां वर्तुलं तद्वत्पितृदैवं तु पूर्ववत् ।
दैवे द्वये यवान्दद्यात्सकुशान्पैत्रयोस्तिलान् ॥११८८॥
विद्याङ्गास्त्रेण याम्ये द्वे उत्तरेशाधिपेरिते[३] ।
पूजयेत्कुसुमैः श्वेतैश्चतुरश्रक्रमात्ततः ॥११८९॥
यत्रैर्द्वयोस्त्रयाणां तु दद्यादर्घ्यं तिलैः सह ।
स्वाहास्वधान्तगैर्मन्त्रैः स्वनामप्रणवादितः ॥११९०॥
दक्षिणं वामदेवेन पादं प्रक्षालयेन्मृदा ।
दद्यादाचमनं सौम्ये स्वाचान्तो विनिवेशयेत् ॥११९१॥
आसनेषु सुधौतेषु वामेनैवोपवेशयेत् ।
द्वयं पूर्वाननं पूर्वं ततस्त्रयमुदङ्मुखम् ॥११९२॥
द्रव्यमर्घाम्बुना प्रोक्ष्य प्रार्थयेत्तं समाहितः ।

१ 'समर्चयेत्'ख पाठान्तरम् । २ 'न्तकम्'ख.। ३ 'चाधिपे' ख ग

यथा श्राद्धं करिष्येऽहं कुरुष्वैवं स तैर्मतः ॥११९३॥
द्वाभ्यां दद्यादजातेन सव्येनासनयोः कुशान् ।
त्रयाणामपसव्येन सर्वत्रैवंविधो विधिः ॥११९४॥
आवाहयेद्यथा नाम पश्चापि तदनन्तरम् ।
रक्षा यवैस्तिलैः कार्या वामेशाभ्यामनुक्रमात् ॥११९५॥
सांनिध्यार्घमघोरेण सुपुष्पाम्बुकुशाक्षतान् ।
द्वाभ्यां त्रिभ्यस्तमीशेन दद्याद्भूमिष्ठजानुकः ॥११९६॥
यवैः पादादिमूर्धान्तं द्वयं संपूज्य रूपिणा ।
तिलैस्तुत्रयमीशेन शिरःप्रभृति पूजयेत् ॥११९७॥
गन्धं पुष्पं च वामेन धूपं दीपं च रूपिणा ।
दत्त्वैशेन पवित्राद्यं ब्रूयात्संपूर्णमित्यपि ॥११९८॥
ततस्तत्संस्रवांस्तेषां पात्रे कृत्वा विधानवित् ।
पित्र्यस्थानमसीत्युक्त्वा न्युब्जं पात्रमधो न्यसेत् ॥११९९॥
सर्वपाकाग्रमानीय हुत्वाग्नौ पितृयज्ञवत् ।
हुतशेषं दधीतान्नं पात्रेषु पुरुषं पठेत् ॥१२००॥
इत्यग्नौ करणं कृत्वा मधुनान्नं घृतप्लुतम् ।
दद्यात्पुंसा पवित्राढ्यं स्पृष्ट्वाघोरेण मन्त्रयेत् ॥१२०१॥
न्युब्जं सव्यं तदङ्गुष्ठममृतान्नं सुसङ्गतम् ।
वामं मृत्युञ्जयं वापि परितो भ्रामयेत्पठन् ॥१२०२॥
अपोशानं समासेन प्रदद्यात्पाणिपल्लवे ।
वाचंयमः प्रभुञ्जानस्ते जुषध्वमितीरिताः ॥१२०३॥
कर्ता तिष्ठेज्जपन्नीशमातृप्तेरुदगाननः ।

अतिथीन्भोजयेच्छक्त्या तत्काले न विचारयेत् ॥१२०४॥
अन्नमादाय तृप्ताःस्थ भणित्वानुमतश्च तैः ।
तदन्नं प्रकिरेद्भूमौ दद्याच्चापः सकृत्सकृत् ॥१२०५॥
उच्छिष्टनिकटे कुर्याद्गोमयेनाथ मण्डलम् ।
तत्र दर्भानजातेन वामेन प्रकिरेत्तिलान् ॥१२०६॥
त्रयं सर्वान्नपिण्डानां सतिलं दक्षिणामुखः ।
दद्यादुपरि दर्भाणां क्रमादीशादिशम्बरैः ॥१२०७॥
विधाय वारिणो धारां वामदेवमुदीरयेत् ।
सुगन्धिपुष्पधूपाद्यैः पूजयित्वा प्रणम्य च ॥१२०८॥
क्षमयित्वोपसंहृत्य समाचम्य विधानवित् ।
पूर्वमाचमनं त्रिभ्यो द्वाभ्यां दद्यादनन्तरम् ॥१२०९॥
दद्याच्च दक्षिणां तेभ्यः कुर्यात्पात्रमुदानम् ।
विसृजेत्प्रणतः सर्वात्प्रदक्षिणमनुव्रजन् ॥१२१०॥
दद्यान्मध्यं स्त्रियै पिण्डं रुद्रांशं सुतहेतुना ।
गोषु विप्राय वा तोये वह्नौ वा त्रीनपि क्षिपेत् ॥१२११॥
शिवश्राद्धे कृते देवामनुष्याः पितरोऽसुराः ।
तृप्ताः शिवानुभावेन वरयन्ति कुलद्वयम् ॥१२१२॥
यत्कीर्तिं द्योतयामासुश्चक्रवालातिकर्मनं (नि कर्मणांम्) ।
कृतः श्राद्धविधिस्तेषां तेन श्रीसोमशंभुना ॥१२१३॥
कथ्यतेऽथ प्रतिष्ठापि संक्षेपेण क्रमेण च ।
पीठं शक्तिः शिवो लिङ्गं तद्योगे सा शिवाणुभिः ॥१२१४॥

१ 'शमुत' क,ख,ग, । २ 'पीठे शक्तिः,ख.'पीठ शक्ति':क.ग.

प्रतिष्ठायाः प्रतिष्ठाद्याः पञ्च भेदाः शिवागमे ।
प्रसिद्धलक्षणं तेषां स्वरूपं च वदाम्यहम्[1] ॥१२१५॥
यत्र ब्रह्मशिलायोगः सा प्रतिष्ठा विशेषतः ।
स्थापनं तु यथायोगं पीठ एव निवेशनम् ॥१२१६॥
प्रतिष्ठाभिन्नपीठस्य स्थिर[2]स्थापनमुच्यते ।
उत्थापनं तु सा प्रोक्ता लिङ्गाधारपुरःसरा ॥१२१७॥
यस्यां तु लिङ्गमारोप्य संस्कारः क्रियते बुधैः ।
आस्थापनं तदुद्दिष्टं पञ्चमीयं शिवाश्रिता ॥१२१८॥
द्विधा नारायणादीनामास्थानोत्थानभेदतः ।
आसु सर्वासु चैतन्यं नियुञ्जीत परं शिवम् ॥१२१९॥
पदाध्वना विभेदेन प्रासादेष्वपि पञ्चधा ।
परीक्षामथ मेदिन्याः कुर्यात्प्रासादकाम्यया ॥१२२०॥
शुक्लाज्यगन्धा रक्ता च रक्तगन्धानुगन्धिनी ।
पीता कृष्णा सुरागन्धा विप्रादीनामनुक्रमात् ॥१२२१॥
पूर्वेशोत्तरसर्वानुप्लवदोषा प्रशस्यते ।
अभावेऽभीष्टवर्णस्य वर्णापादानमाचरेत् ॥१२२२॥
आखाते हास्तिके यस्याः पूर्णे मृदधिका भवेत् ।
उत्तमां तां महीं विद्यात्तोयाद्यैर्वा परीक्षयेत् ॥१२२३॥
अस्थ्यङ्गारादिभिर्दुष्टामत्यन्तं शोधयेद्भुवम् ।
खननैर्गोकुलावासैः कर्षणैर्वा मुहुर्मुहुः ॥१२२४॥
मण्डपे द्वारपूजादिमन्त्रतृप्त्यवसानकम् ।

---

१ 'वदामहे' क. ख. ग. २ स्थित ख. पाठः ।

कर्म निर्वर्त्य घोरास्त्रसहस्रं विधिना यजेत् ॥१२२५॥
समीकृत्योपलिप्तायां भूमौ संसाधयेद्दिशः ।
स्वर्णादक्ष्यक्षतै रेखाः प्रकुर्वीत प्रदक्षिणम् ॥१२२६॥
दद्यादीशानकोष्ठस्थपूर्णकुम्भे शिवं यजेत् ।
वास्तुमभ्यर्च्य तत्तोयैः सिञ्चेत्कुद्दालकादिकम् ॥१२२७॥
बाह्ये रक्षोग्रहानिष्ट्वा विधिना दिग्बलिं क्षिपेत् ।
पूजां कुम्भे समाहृत्य प्राप्ते लग्नेऽग्निकोष्ठके ॥१२२८॥
कुद्दालेनाभिषिक्तेन मधुनाक्तेन खानयेत् ।
नैर्ऋत्यां क्षेपयेन्मृत्स्नां खाते कुम्भजलं क्षिपेत् ॥१२२९॥
भूमिं संशोध्य संप्लाव्य कुद्दालाद्यं प्रपूजयेत् ।
अन्यं वस्त्रयुगच्छन्नं कुम्भं स्कन्धे द्विजन्मनः ॥१२३०॥
निधाय गीतवाद्यादि वेदघोषसमाकुलम् ।
पुरस्य पूर्वमीशान्तं नयेद्यावद्भीप्सितम् ॥१२३१॥
अथ तत्र क्षणं स्थित्वा भ्रामयेत्परितः पुरम् ।
सिञ्चन् सीमान्तचिह्नानि यावदीशान्तगोचरम् ॥१२३२॥
अर्घदानमिदं प्रोक्तं रुद्रकुम्भपरिभ्रमात् ।
इत्थं परिग्रहं भूमेः कुर्वीत तदनन्तरम् ॥१२३३॥
कर्परान्तं जलान्तं वा शल्यदोषजिघांसया ।
खानयेदथवा ज्ञात्वा विधिना शल्यमुद्धरेत् ॥१२३४॥

बकचतपहाः समया
वदेत्प्रश्नाक्षराणि जायन्ते।

लग्ने द्विजादिपतिताः
स्वस्थाने शल्यमाख्यान्ति ॥१२३५॥
कर्तुः स्वाङ्गविकारेण जानीयात्तत्प्रमाणतः ।
पश्चादीनां प्रवेशेन कीर्तनैर्विरुतैर्दिशः ॥१२३६॥
दिङ्मात्रमिदमाख्यातं विस्तरोऽन्यत्र लक्ष्यते
अश्मसास्तोकखातेषु शल्योद्धारप्रयोजनम् ॥१२३७॥
पूर्याश्मभिः करापूरैरष्टाङ्गुलमृदन्तरैः ।
पादोनखातमापूर्य सजलैर्मुद्गराहतैः ॥१२३८॥
लिप्तां समप्लवां तत्र कारयित्वा भुवं गुरुः ।
सामान्यार्घकरो[1] यायान्मण्डलं वक्ष्यमाणकम् ॥१२३९॥
तोरणे द्वाःपतीनिष्ट्वा प्रत्यग्द्वारेण संविशेत् ।
कुर्यात्तत्रात्मशुद्ध्यादि कुण्डमण्डपसत्कृतिम् ॥१२४०॥
कलशं वार्धनीयुक्तं लोकपालशिवार्चनम् ।
अग्नेर्जननपूजादिसर्वं पूर्ववदाचरेत् ॥१२४१॥
यजमानान्वितो यायाच्छिलानां स्नानमण्डपम् ।
शिलाप्रासादलिङ्गस्य पादा धर्मादिसंज्ञकाः ॥१२४२॥
अष्टाङ्गुलोच्छ्रिताः शस्ताश्चतुरश्राः करायताः ।
पाषाणानां शिलाः कार्या इष्टकानां तदर्धतः ॥१२४३॥
प्रासादाश्मशिलाशैले[2] इष्टिका इष्टकामये ।
अङ्किता नव वज्राद्यैः पञ्च वा पङ्कजाङ्कितैः ॥१२४४॥
नन्दा भद्रा जया रिक्ता पूर्णाख्या पञ्चमीशिला ।

१ 'र्घ्य ख.। २ 'शैले ऐष्टिका इष्टिकामयैः' क

आसां पद्मो महापद्मः शंखो मकरकस्तथा ॥१२४५॥
समुद्रश्चेति पञ्चानां निधिकुम्भाः क्रमादमी ।
नन्दा भद्रा जया पूर्णाप्यजिता चापराजिता ॥१२४६॥
विजया मङ्गलाख्या च धरणी नवमी शिला ।
सुभद्रश्च विभद्रश्च सुनन्दः पुष्पदन्तकः ॥१२४७॥
जयोऽथ विजयश्चैव कुम्भः पूर्वस्तथोत्तरः ।
नवानां तु यथासंख्यं निधिकुम्भा अमी नव ॥१२४८॥
आसनं प्रणवं दत्त्वा ताडयोल्लिख्य शराणुना ।
सर्वासामविशेषेण तनुत्रेणावगुण्ठनम् ॥१२४९॥
मृद्भिर्गोमयगोमूत्रकषायैर्गन्धवारिणा ।
अस्त्रेण हूंफडन्तेन मलस्नानं समाचरेत् ॥१२५०॥
विधिना पञ्चगव्येन स्नानं पञ्चामृतेन च ।
गन्धतोयान्तरं कुर्यान्निजनामाङ्किताणुना ॥१२५१॥
फलरत्नसुवर्णानां गोशृङ्गसलिलैस्ततः ।
चन्दनेन समालभ्य वस्त्रैराच्छदयेच्छिलाम् ॥१२५२॥
[1]षड्ग्रन्थमासनं दत्त्वा नीत्वा यागप्रदक्षिणाम् ।
शय्यायां कुशतल्पे वा हृदयेन निवेशयेत् ॥१२५३॥
संपूज्य न्यस्य बुद्ध्यादिधरान्तं तत्त्वसंचयम् ।
त्रिखण्डव्यापकं तत्त्वत्रयं चासु क्रमान्न्यसेत् ॥१२५४॥
बुद्ध्यादौ चित्तपर्यन्ते चित्तान्तर्मातृकावधौ ।

१ 'षड्रत्थं, ख. ।

तन्मात्रादौ धरान्ते च शिवविद्यात्मनां स्थितिः ॥१२५५॥

तत्त्वानि निजमन्त्रेण तत्त्वेशांश्च हृदार्चयेत् ।

स्थानेषु पुष्पमालादिचिह्नितेषु यथाक्रमम् ॥१२५६॥

मन्त्राश्च यथा—ॐ हूं शिवतत्त्वाय नमः, ॐ हां शिवतत्त्वाधिपाय रुद्राय नमः। ॐ हां विद्यातत्त्वाय नमः, ॐ हां विद्यातत्त्वाधिपाय विष्णवे नमः। ॐ हां आत्मतत्त्वाय नमः, ॐ हां आत्मतत्त्वाधिपतये ब्रह्मणे नमः।

क्ष्माग्नियजमानर्कजलवातेन्दुखानि च ।

प्रतितत्त्वं न्यसेदष्टौ मूर्तीः प्रतिशिलं शिलाम् ॥१२५७॥

शर्वं पशुपतिं चोग्रं रुद्रं भवमथेश्वरम् ।

महादेवं च भीमं च मूर्तीशांश्च यथाक्रमात् ॥१२५८॥

ॐ धरामूर्तये नमः, ॐ धराधिपतये शर्वाय नमः, इत्यादिमन्त्राः

लोकपालाननन्ताद्यान्यथासंख्यं निजाणुभिः ।

इन्द्रादिबीजानि—

लरूं रूं मूं श्रूं षूं सूं हूं इत्युक्तनवकशिलाः। पञ्च यदा, तदा

प्रतितत्त्वं न्यसेन्मूर्तीः सृष्ट्वा पञ्च धरादिकाः ।

ब्रह्माविष्णुस्तथा रुद्र ईश्वरश्च सदाशिवः ॥१२५९॥

एते च पञ्च मूर्तीशा न्यस्तव्यास्तासु पूर्ववत् ।

ॐ पृथिवीमूर्तये नमः, ॐ पृथिवीमूर्त्यधिपतये ब्रह्मणे नमः ।

इत्यादिमन्त्राः

संपूज्य कलशान्पञ्च क्रमेण निजनामभिः ।
निरुन्धीत विधानेन न्यासो मध्यशिलाक्रमात् ॥१२६०॥
कुर्यात्प्राकारमस्त्रेण भूतिदर्भतिलैस्ततः ।
कुण्डेष्वाधारिकां शक्तिं विन्यस्याभ्यर्च्य तर्पयेत् ॥१२६१॥
तत्त्वतत्त्वाधिपान्मूर्तिमूर्तीशांश्च घृतादिभिः ।
ततो ब्रह्मात्मशुद्ध्यर्थं मूलाङ्गब्रह्मभिः क्रमात् ॥१२६२॥
हुत्वा शतादिपूर्णान्तं प्रोक्ष्य शान्तिजलैः शिलाः ।
पूजयेच्च कुशैः स्पृष्ट्वा प्रतितत्त्वमनुक्रमात् ॥१२६३॥
सान्निध्यमथ सन्धानं कृत्वा शुद्धं पुनर्न्यसेत् ।
एवं भागत्रये कर्म कृत्वा गत्वा समाचरेत् ॥१२६४॥
संस्पृशेद्दर्भमूलाद्यैः तत्त्वेशादित्रयं क्रमात् ।
कुर्यात्तत्त्वानुसन्धानं ह्रस्वदीर्घप्रयोगतः ॥१२६५॥

ॐ आं ई आत्मविद्यातत्त्वाभ्यां नमः । ॐ ईं ऊं विद्यातत्त्व शिव तत्त्वाभ्यां नमः ।

घृतेन मधुना पूर्णास्ताम्रकुम्भान्सरत्नकान् ।
पञ्चगव्याम्बुसंसिक्ताँल्लोकपालाधिदैवतान् ॥१२६६॥
पूजयित्वा निजैर्मन्त्रैः सर्वेषां होममाचरेत् ।
शिलानामथ सर्वासां संस्मरेदधिदेवताः ॥१२६७॥
विद्यारूपकृतस्नाना हेमवर्णाः सिताननाः ।
सर्वाभरणसंपन्नाः शिलानामधिदेवताः ॥१२६८॥

न्यूनादिदोषमोक्षार्थं वास्तुभूमिविशुद्धये ।
यजेदक्षेण पूर्णान्तमाहुतीनां शतं शतम् ॥१२६९॥
ततः प्रासादमासूत्र्य[1] वर्तयेद्वास्तुमण्डलम् ।
कुर्यात्कोष्ठचतुःषष्टिं क्षेत्रे वेदाश्रके समे ॥१२७०॥
कोणेषु विन्यसेद्वंशौ रज्जवोऽष्टौ विकोणगाः ।
द्विपदाः षट्पदास्तास्तु वास्तुं तत्रार्चयेद्यथा ॥१२७१॥
विकुञ्चितकचं [2]वास्तुमुत्तानतसुराकृतिम् ।
स्मरेत्पूजासु कुड्यादिनिवेशं त्वधराननम् ॥१२७२॥
जानुनी कूर्परासक्ते दिशि वातहुताशयोः ।
पैत्र्यां पादपुटौ रौद्र्या शिरोऽस्य हृदयेऽञ्जलिः ॥१२७३॥
अस्य देहे समारूढा देवताः पूजिताः शुभाः ।
अष्टौ कोणाधिपास्तत्र कोणाधिष्ठाः समुज्ज्वलाः ॥१२७४॥
षट्पदास्तु मरीच्याद्या इत्थं पूर्वादिषु क्रमात् ।
मध्ये चतुष्पदो ब्रह्मा शेषास्तु पदिकाः स्मृताः ॥१२७५॥
समस्तनाडिसंपातो महामर्माम्बुजं फलम् ।
त्रिशूलं स्वस्तिको वज्रं महास्वस्तिकसंपुटौ ॥१२७६॥
त्रिकटि मणिबन्धश्च सुविशुद्धपदं ततः ।
इति द्वादशमर्माणि वास्तुभित्त्यादिषु यजेत् ॥१२७७॥
साज्यमक्षतमीशाय पर्जन्यायाम्बुजोदकम् ।
ददीताथ जयन्ताय पताकां कुङ्कुमोज्ज्वलाम् ॥१२७८॥

---

१ 'मामूत्र्य' क.ग. । २ 'अपुरा' क. 'असुरा. ख. ।

रत्नवारि महेन्द्राय रवौ धूम्रं वितानकम् ।
सत्याय घृतगोधूमं माषभक्तं भृशाय च ॥१२७९॥
विमांसमन्तरिक्षाय सक्तून्वेत्यष्ट पूर्वतः ।
मधुक्षीराज्यसंपूर्णं प्रदद्याद्वह्नये स्रुवम् ॥१२८०॥
लाजान् पूष्णो सुवर्णाम्बु वितथाय निवेदयेत् ।
दद्याद्गृहक्षते क्षौद्रं यमराजे पलौदनम् । ॥१२८१॥
गन्धं गन्धर्वनाथाय जिह्वां भृङ्गाय पक्षिणाम् ।
मृगाय यवपर्णानि याम्यामित्यष्ट देवताः ॥१२८२॥
पित्रे तिलौदनं क्षीरं वृक्षजं दन्तधावनम् ।
दौवारिकाय देवाय प्रदद्याद्ध्यानमुद्रया ॥१२८३॥
सुग्रीवायादिशेत्पूपान्पुष्पदन्ताय दर्भकम् ।
[1]रक्तं प्रचेतसे पद्ममसुराय सुरासवम् ॥१२८४॥
घृतप्लुतौदनं शोषे रोगाय घृतमण्डकम् ।
लाजान्वा पश्चिमाशायां देवाष्टकमितीरितम् ॥१२८५॥
मारुताय ध्वजं पीतं नागाय नागकेसरम् ।
मुख्ये भक्ष्याणि भल्लाटे मुद्गसूपं सुसंस्कृतम् ॥१२८६॥
सोमाय पायसं साज्यं शालूकं मृगाय[2] दिशेत् ।
लोपीमदितये दित्यै पुरीमित्युत्तरेऽष्टकम् ॥१२८७॥
मोदका ब्रह्मणे प्राच्यां षट्पदाय मरीचये ।
सावित्रे रक्तपुष्पाणि वह्न्यधःकोणकोष्ठके ॥१२८८॥
तदधःकोष्ठके दद्यात्सावित्रे च कुशोदकम् ।

---
१ 'वस्त्रं' ख. पाठः । २ 'मुजले' ख. ।

दक्षिणे चन्दनं पीतं षट्पदाय विवस्वते ॥१२८९॥
हरिद्रौदनमिन्द्राय रक्षोऽधःकोणकोष्ठके ।
इन्द्रजयाय, मिष्टान्नमिन्द्राधस्तान्निवेदयेत् ॥१२९०॥
वारुण्यां षटपदासीनमित्राय सगुडौदनम् ।
रुद्राय घृतसिद्धान्नं वायुकोणादधः पदे ॥१२९१॥
तदधो रुद्रमादाय, मांसमार्द्र मथोत्तरे ।
जगदीशाय नैवेद्यं षट्पदस्थे धराधरे ॥१२९२॥
आदा(पा)य शिवकोणाधस्तद्वत्सायैव तत्तिलान् ।
क्रमाद्दद्याद्दधि क्षीरं पूजयित्वा विधानतः ॥१२९३॥
चतुष्पदनिविष्टाय ब्रह्मणे मध्यदेशतः ।
पञ्चगव्याक्षतोपेतं चरुं साज्यं निवेदयेत् ॥१२९४॥
ईशादिवायुपर्यन्तं कोणेषु च यथाक्रमम् ।
वास्तुबाह्ये चरक्याद्याश्चतस्रः पूजयेत्तथा ॥१२९५।
चरक्यै सघृतं मांसं विदार्यै दधिपङ्कजे ।
पूतनायै पलं पित्तं रुधिरं च निवेदयेत् ॥१२९६।
अस्थीनि पापराक्षस्यै रक्तपित्तपलानि च ।
ततो मांसौदनं प्राच्यां स्कन्दाय विनिवेदयेत् ॥१२९७
अर्यम्णे दक्षिणाशायां पूपानकृसरसंयुतान् ।
जृम्भकाय च वारुण्यामामिषं रुधिरान्वितम् ॥१२९८
उदीच्यां पिलिपिच्छाय रक्तान्नं कुसुमानि च ।

मयागमानुसारेण वास्तुपूजेति कीर्तिता ।
पूजेयं गदितान्यत्र कुशदर्भाक्षतैस्तिलैः ॥१२९९॥
गृहेऽपि वर्तयेद्वास्तुं किंत्वेकाशीतिकोष्ठके ।
त्रिपदा रज्जवः कार्याः षट्पदाश्च यथा पुरा ॥१३००॥
ईशाद्याः पदिकास्तासिन्नोमाद्याश्च द्विकोष्ठगाः ।
षट्पदस्था मरीच्याद्या ब्रह्मा नवपदः स्मृतः ॥१३०१॥
ईशादिषु चरक्याद्याः पूर्ववत्पूजयेद्बहिः ।
आहुतित्रितयं दद्यात्प्रतिदेवमनुक्रमात् ॥१३०२॥
दत्त्वा भूतबलिं लग्ने शिलान्यासमुपक्रमेत् ।
मध्यश्वभ्रे न्यसेच्छक्तिं कुम्भं चानन्तमन्त्रितम् ॥१३०३॥
लकारारूढमूलेन कुम्भेऽस्मिन्धरणीं शिलाम्[1] ।
कुम्भानष्टौ सुभद्रादीन्दिक्षु पूर्वादिषु क्रमात् ॥१३०४॥
लोकपालाणुभिर्न्यस्येत्श्वभ्रेषु न्यस्तशक्तिषु ।
शिलास्तेष्वथ नन्दाद्याः क्रमशो विनिवेशयेत् ॥१३०५॥
शम्भरैर्मूर्तिनाथानां यथा स्युर्भित्तिमध्यतः ।
तासु धर्मादिकानष्टौ कोणकोणत्रिभागशः ॥१३०६॥
सुभद्रादिषु नन्दाद्याश्चतस्रोऽग्न्यादिकोणगाः ।
अजिताद्याश्च पूर्वादि जयादिष्वथ विन्यसेत् ॥१३०७॥
ब्रह्माणं चोपरि न्यस्य व्यापकं च महेश्वरम् ।
चिन्तयेत् च तथाध्वानं व्योमप्रासादमध्यगम् ॥१३०८॥
बलिं दत्त्वा जपेदस्त्रं विघ्नदोषनिवारणम् ।

१ 'धरणी शिला' ख. ।

शिलापञ्चकपक्षेऽपि मनाग्गुद्दिश्यते यथा ॥१३०६॥
मध्ये पूर्णां शिलां न्यसेत्समुद्रकलशोर्ध्वतः ।
पद्मादिषु च नन्दाद्याः कोणेष्वग्न्यादिषु क्रमात् ॥१३१०॥
मध्याभावे चतस्रोऽपि मोक्षसद्भावसंमताः ।
ओंपूर्णे त्वं महाविद्ये सर्वसन्देहलक्षणे ॥१३११॥
सर्वं संपूर्णमेवात्र कुरुष्वाङ्गिरसः सुते ।
ओं नन्दे नन्दिनीं पुंसां त्वामत्र स्थापयाम्यम् ।१३१२॥
प्रासादेऽत्र सुसंहृष्टा यावच्चन्द्रार्कतारकम् ।
आयुष्कामं श्रियं नन्दे देहि वाहे ... देहिनाम् १ ॥१३१३
अग्निस्त्वचा सदा कार्या प्रासादे यत्नतस्त्वया ।
ओं भद्रे सर्वदा भद्रे लोकानां गुरुकाम्यसि ॥१३१४
आयुर्दा कामदा देवि श्रीप्रदा च सदा भव ।
ओंजये तु सदा देवि तिष्ठ त्वं स्थापिता मया ॥१३१५
नित्यं जयाय भूत्यै च स्वामिनो भव भार्गवि ।
ओंरिक्ते रिक्तदोषघ्ने सिद्धिमुक्तिप्रदे शुभे ॥१३१
सर्वदा सर्वदेहस्थे तिष्ठास्मिन्नीशरूपिणि ।
गगनायतनं ध्यात्वा तत्र तत्त्वत्रयं न्यसेत् ॥१३१
प्रायश्चित्तं ततोऽस्यापि[1] विधिना विसृजेन्मखम् ।
क्रियाकाण्डक्रमावल्यां श्रीमता सोमशंभुना ॥१३१
संक्षेपेण शिलान्यासविधानमिति कीर्तितम् ।

---

१ 'ततोऽत्रापि' ख. ।

अथ लिङ्गप्रतिष्ठायां विधानमभिधीयते।
सा सदा क्रियते मुक्तौ भुक्तौ देवदिने सति ॥१३१६॥
विना चैत्रेण माघादौ प्रतिष्ठा मासपञ्चके।
गुरुशुक्रोदये कार्या प्रथमे करणत्रये ॥१३२०॥
शुक्लपक्षे विशेषेण कृष्णोऽप्यापञ्चमं दिनम्।
चतुर्थीं नवमीं षष्ठीं वर्जयित्वा चतुर्दशीम् ॥१३२१॥
शोभनास्तिथयः शेषाः क्रूरवारविवर्जिताः।
तारायोगविशेषं च जानीयाज्ज्योतिषां क्रमे ॥१३२२॥
शतभिषग्धनिष्ठार्द्रा अनूराधोत्तरात्रयम्।
रोहिणी श्रवणश्चेति स्थिरारम्भे महोदयाः ॥१३२३॥
लग्नं च सिंहकुम्भालितुलस्त्रीवृषधन्विनाम्।
भेदो नक्षत्रचिह्नानां कथितः पिङ्गलामते ॥१३२४॥
पुष्यहस्तोत्तराषाढाः पूर्वाषाढा च रोहिणी।
ऋक्षाण्येतानि विप्रस्य प्रशस्तान्यथ राजनि ॥१३२५॥
पुनर्वसुस्तथा चित्रा धनिष्ठा श्रवणान्विता।
विशस्तु रेवती रुद्रा सार्धमुत्तरयाश्विनी ॥१३२६॥
शूद्रस्य च मघा श्रेष्ठा स्वातिः पूर्वा च फाल्गुनी।
एतान्यपि विशेषेण दृश्यन्ते परमेश्वरे ॥१३२७॥
धाम्नः पञ्चगुणां भूमिं त्यक्त्वा बाधामसंमिताम्।
हस्ताद्द्वादशसोपानान्कुर्यान्मण्डपमग्रतः ॥१३२८॥
चतुर्हस्तं चतुर्द्वारं स्नानार्थं तु तदर्धतः।

१ 'ततोऽत्रापि' ख.

एकास्यं[1] चतुरास्यं वा रौद्र्यां प्राच्युत्तरेऽथवा ॥१३२६॥
त्रयाणामादिलिङ्गानां विदध्यान्मण्डपत्रयम् ।
हास्तिकेष्टकरं शेषावेकैककरवर्धितौ ॥१३३०॥
वर्धयेदन्यलिङ्गानां द्वौ करौ प्रतिमण्डपम् ।
यावन्नवकरे लिङ्गे द्वाविंशतिकरो भवेत् ॥१३३१॥
हास्तिके दशहस्ते वा मण्डपे तु करेऽथवा ।
द्विहस्तोत्तरया वृद्ध्या शेषं स्यान्मण्डपाष्टकम् ॥१३३२॥
पादादिवृद्धलिङ्गेषु कुर्यात्पादानुसारतः ।
बाणरत्नजलोहादौ मण्डपे हास्तिके यथा ॥१३३३॥
यः प्रासादो भवेद्देव्याः कुर्याद्वा तस्य मण्डपम् ।
प्रासादः सर्वलिङ्गानां ज्ञातव्यः शिवशास्त्रतः ॥१३३४॥
[2]घनो घोषो विरागश्च काञ्चनः कामरामकौ ।
सुवेशो धर्मरो दत्तो नवानां नवमण्डपाः ॥१३३५॥
चतस्रः कोणगाः स्थूणा द्वेद्वे द्वारेषु हास्तिके ।
विस्तीर्णे तु यथा शोभा ता भवन्त्यपरा अपि ॥१३३६॥
वेदी चतुष्करा मध्ये कोणेषु स्तम्भसंयुता ।
अष्टाङ्गुलोच्छ्रितान्येषु वेदीनां मानमुच्यते ॥१३३७॥
द्व्यङ्गुलं तु समुच्छ्राये विस्तारे तु करं भवेत् ।
क्रमेण वर्धयेदासां यावत्ता रविसंख्यया ॥१३३८॥
सान्तरे वर्धयेत्पादं विस्तारादुच्छ्रयादपि ।

१ 'एकास्रं चतुरश्रंवा' ख. २ 'शोणो गौरः' ख. पाठान्तरं'

मध्ये पदेऽथवा वेदीमण्डपे नवधाकृते ॥१३३९॥
वेदीपादान्तरे त्यक्त्वा कुण्डानि नव पञ्च वा ।
कुर्यान्मन्त्रक्रमादीशे पञ्चमं नवमं गुरुः ॥१३४०॥
एकं वा शिवकाष्ठायां प्राच्यां वा तद्गुरोः पदम् ।
शस्तानि तानि वृत्तानि चतुरश्राणि वा सदा ॥१३४१॥
कन्यसे हास्तिकं कुण्डे शेषाणां द्व्यङ्गुलोत्तरम् ।
एवं दशकरे लिङ्गे कुण्डं कुर्यात करद्वयम् ॥१३४२॥
बाणरत्नादिलिङ्गानां विदध्यान्मण्डपोचितान् ।
कुण्डानन्यानपि स्तोकात्प्रसङ्गेन च वच्मि तान् ॥१३४३॥
मुष्टिमानं शतार्धस्य शते चारत्निमात्रकम् ।
हस्तं सहस्रहोमे स्यादयुते च द्विहस्तिकम् ॥१३४४॥
लक्षे चतुष्करं कुण्डं प्रयुते षट्करं स्मृतम् ।
कुण्डमष्टकरं कुर्यात्कोटिहोमे नचाधिकम् ॥१३४५॥
स्तम्भाय पूर्वं शत्रूणां चतुरश्रं प्रकीर्तितम् ।
आग्नेय्यां तु भगाकारं भोगावाप्त्यै प्रकीर्तितम् ॥१३४६॥
शुभदं दिशि याम्यायां कुण्डमर्धेन्दुसंनिभम् ।
त्र्यश्रं जयाय नैर्ऋत्यां वारुणे सोममण्डलम् ॥१३४७॥
शान्तिमृत्युञ्जयाद्येषु षडश्रं वायुदिग्गतम् ।
कुण्डं कुशेशयाकारमुत्तरे पुष्टिकारकम् ॥१३४८॥
रौद्र्यां भयदमष्टाश्रमिति दृष्टं शिवागमे ।
तिर्यग्जातिसमं खातमूर्ध्वंमेखलया सह ॥१३४९॥

बहिरेकाङ्गुलः कण्ठे द्व्यङ्गुलः क्वचिदागमे ।
तद्बहिर्मेखलास्तिस्रो वेदवह्नियमाङ्गुलैः ॥१३५०॥
षड्बाणाब्धित्रिपक्षैर्वा क्रमशः पञ्च मेखलाः ।
अङ्गुलैः षड्भिरेकैर्वा कुण्डाकारा इमे मताः ॥१३५१॥
तासामुपरि योनिः स्यान्मध्येऽश्वत्थदलाकृतिः
उच्छ्रायेणाङ्गुलं तस्या विस्तारेणाङ्गुलाष्टकम् ॥१३५२॥
दैर्घ्यं कुण्डार्धमानेन कुण्डे कण्ठसमोदराः ।
पूर्वाग्नियाम्यकुण्डानां योनिः स्यादुत्तरानना ॥१३५३॥
पूर्वानना तु शेषाणामैशानेऽन्यतरा द्वयोः ।
कुण्डानां[1]पञ्चविंशो यो भागः सोऽङ्गुलसंज्ञकः ॥१३५४॥
विभज्यानेन[2] कर्तव्या मेखलाकण्ठनाभयः ।
प्लक्षोदुम्बरकाश्वत्थवटजास्तोरणाः क्रमात् ॥१३५५॥
पूर्वादितो विधातव्या यद्वाप्यन्तविपर्ययात् ।
शान्तिभूतिबलारोग्यनामान्येषां यथाक्रमम् ॥१३५६॥
अलाभादेकमेवैषां सर्वासां विनिवेशयेत् ।
पञ्चषट्सप्तहस्तानि तोरणानि कनीयसाम् ॥१३५७॥
त्रीणि मध्यमलिङ्गानि वृद्ध्याष्टाङ्गुलया क्रमात् ।
चतुरङ्गुलया वृद्ध्या तोरणानि महीयसाम् ॥१३५८॥
एवं नवकरे लिङ्गे तत्सार्धाष्टकरं भवेत् ।
खातो हस्तप्रमाणः स्यात्तोरणानां कनीयसाम् ॥१३५९॥

---

१ 'यश्चतुर्विंशो भागः' ख. । २ 'तेन ख. ।

मध्यमानां क्रमेणायं चतुरङ्गुलवृद्धितः ।
त्रयाणामुत्तमानां तु खातः सार्धकरो मतः ॥१३६०॥
क्रमाद्‌द्व्यङ्गुलया वृद्ध्या [1]महाद्वारान्तरे पुनः ।
सर्वेषां तु समांशेन भागः कार्य इतीरितम् ॥१३६१॥
विस्तारं तूच्छ्रयस्यार्धं तुल्यो वा धारिकाः समाः ।
बाहुल्यं पञ्चहस्तस्य तोरणस्य षडङ्गुलम् ॥१३६२॥
शेषाणां वर्धयेदत्र क्रमादङ्गुलमङ्गुलम् ।
प्रथमेऽष्टाङ्गुलं शल्यमन्येषामङ्गुलोत्तरम् ॥१३६३॥
विद्यादानुपूर्वेण नासापिण्डं च तत्समम् ।
उच्छ्रायपञ्चमांशेन शूलपक्षांशनिर्गमः ॥१३६४॥
निजोच्छ्रायत्रिभागेन शूलपक्षप्रविस्तृतिः
प्रवेशं द्व्यङ्गुलं चास्य क्रमादेकाङ्गुलोत्तरम् ॥१३६५॥
ललाटे स्वस्तिकं पद्मं लक्ष्मीं वा परिवेशयेत् ।
स्तम्भा रम्भा(:) प्रतिद्वारं माला चास्य दले गता ॥१३६६॥
बाहयेत्पश्चिमद्वारं पिदध्यादपराणि तु ।
इन्द्रायुधोपमा रक्ता कृष्णा धूम्रा शशिप्रभा ॥१३६७॥
शुकाभा हेमवर्णा च पताकाः स्फटिकप्रभाः ।
पूर्वादितो विधातव्या रक्ता च ब्रह्मणः पदे ॥१३६८॥
नीलानन्तस्य नैर्ऋत्यां चित्राथ वासिताः ।
पञ्चहस्तध्वजास्तद्वत्कार्या द्विकरविस्तृताः ॥१३६९॥

---

१ 'मोहदूरा' क. ।

हस्तप्रवेशिता दण्डं ध्वजानां पञ्च हास्तिकाः ।
सप्तहस्ताः पताकास्तु विंशत्यङ्गुलविस्तृताः ॥१३७०॥
दशहस्ताः पताकास्तु पञ्चमांशं प्रवेशिताः ।
सप्तभिर्दशभिः कार्या विंशत्यां वा करे ध्वजाः ॥१३७१॥
कन्यसे मध्यमे ज्येष्ठे हस्तद्वितयविस्तृताः ।
अथवाष्टकरा ज्येष्ठा विस्तारेण द्विहस्तिकाः ॥१३७२॥
अर्धहानिक्रमाच्छेषा इति दृष्टं शिवागमे ।
द्विगुणं ब्रह्मणो भागात्पीठं क्षीरतरूद्भवम् ॥१३७३॥
पङ्कजाङ्कं चतुष्पादमुच्छ्राये षोडशाङ्गुलम् ।
अथवोक्तसमुच्छ्रायं विस्तारं द्विगुणं ततः ॥१३७४॥
विस्तारं द्विगुणायामं भद्रपीठं कनीयसम् ।
चतुरङ्गुलया वृद्ध्या तदन्येषामनुक्रमात् ॥१३७५॥
नवानां त्रीणि पीठानि दृश्यन्ते विस्तरागमे ।
पर्वताग्रान्नृपद्वारान्नदीतीराद्वयाद् गजात् ॥१३७६॥
वाल्मीकाद्दन्तिदन्ताग्रात् [गोश्रृङ्गादर्णवात् ह्रदात्] ।
पद्मखण्डाद्वराहाच्च गोष्ठादपि चतुष्पदात् ॥१३७७॥
मृत्तिका [श्चैव संग्राह्या गङ्गाया देवद्वारतः ] ।
न्यग्रोधोदुम्बराश्वत्थचूतजम्बूत्वगुद्भवम् ॥१३७८॥
कषायपञ्चकं ग्राह्यमार्तवं च फलाष्टकम् ।
तीर्थाम्भांसि सुगन्धीनि तथा सर्वौषधीजलम् ॥१३७९॥
सस्यपुष्पं तथा स्वर्णरत्नगोश्रृङ्गवारि च ।
स्नानायोपहरेत्पञ्चगव्यं पञ्चामृतं ततः ॥१३८०॥

पिष्टनिर्मितवज्रादिद्रव्यं निर्भर्त्सनाय च।
सहस्रसुषिरं कुम्भं मङ्गलाय च रोचनम् ॥१३८१॥
शतमोषधिमूलानां विजया लक्ष्मणाभया।
गुडूच्यतिबला पाठा सहदेवी शतावरी ॥१३८२॥
सुवर्चला तथा वृद्धिः स्नानायोक्ता पृथक्पृथक्।
रक्षायै तिलदर्भाद्यैर्वस्त्राणां भस्म केवलम् ॥१३८३॥
यवगोधूमबिल्वानां चूर्णानि च विचक्षणः।
विलेपनं सकर्पूरं स्नानार्थं गडुकुम्भकान् ॥१३८४॥
मण्डपानां विताने द्वे कुर्याच्चित्रैः सदम्बरैः।
खट्वाथ तूलिकायुग्मं सोपधानं सवस्त्रकम् ॥१३८५॥
कुर्याद्वित्तानुसारेण शयने लक्ष्मकल्पने।
घृतक्षौद्रयुतं पात्रं कुर्यात्स्वर्णशलाकिकाः ॥१३८६॥
त्रिद्व्येकमाषकास्ताश्च क्रमाज्ज्येष्ठादिषु त्रिषु।
वार्धानी शिवकुम्भं च लोकपालपटानपि ॥१३८७॥
एवं निद्राकृते कुम्भं शान्त्यर्थं कुण्डसंख्यया।
द्वारपालादिधर्मादि प्रशान्तादि घटानपि ॥१३८८॥
धान्यमञ्जकृताधाराः सवस्त्राः स्रग्विभूषिताः।
सहिरण्याः समालब्धा गन्धपानीयपूरिताः ॥१३८९॥
पूर्णपात्रफलाधाराः पल्लवास्याः सुलक्षणाः।
कुम्भाः सर्वे विधातव्याः सवस्त्राः कुम्भतोरणाः ॥१३९०॥

वस्त्रेणाच्छादयेत्कुम्भानाहरेद् गौरसर्षपान् ।
विकिरार्थं ततो लाजाञ्ज्ञानखड्गेन पूर्ववत् ॥१३६१॥
समिद्धानां चरुस्थालीं दर्वीं च ताम्रनिर्मिताम् ।
घृतक्षौद्रान्वितं पात्रं पादाभ्यङ्गकृतेऽथवा[1] ॥१३६२॥
विष्टरांस्त्रिंशता दर्भैर्बाहुप्रमाण ................. ।
.......... चतुरस्तद्वत्पलाशान्परिधीनपि ॥१३९३॥
तिलपात्रं हविष्पात्रमर्घपात्रं सयन्त्रकम् ।
पलविंशतिमानानि घण्टाधूपप्रधानकम् ॥१३६४॥
स्रुक्स्रुवौ पिटकान्पीठं व्यजनं शुष्कमिन्धनम् ।
मुक्ता मुक्तानि पुष्पाणि बिल्वपत्राणि गुग्गुलम् ॥१३६५॥
चन्दनं कुङ्कुमं धूपं प्रदीपान् घृतपूरितान् ।
अक्षतानि त्रिसूत्री च गव्यमाज्यं यवांस्तिलान् ॥१३६६॥
कुशांश्चातिदीर्घांश्च शान्तौ तु मधुरत्रयम् ।
पायसं यज्ञवृक्षोत्थाः समिधो दशपर्विकाः ॥१३६७॥
अङ्गुलत्रितयं ज्ञेयं षड्यवादि प्रभेदतः ।
अधमं मध्यमं ज्येष्ठं स्वीकुर्वीत यथारुचि ॥१३६८॥
षट्त्रिंशदङ्गुलैर्दीर्घां स्रुचं वा बाहुसंमिताम् ।
ज्येष्ठामध्याधमां कुर्यादेकैकाङ्गुलिहानितः ॥१३६९॥
अष्टैकसप्तभिस्तस्य वेदीकण्ठौ मुखं क्रमात् ।
अनाहायामतो दण्डो न सविंशतिभिर्भवेत् ॥१४००॥
रामो वेदाङ्गुलः कुम्भो गण्डीयुगयमाङ्गुलम्

१ 'तथा' क. ग. पाठः ।

खातं वेदाङ्गुलैर्वृत्तं द्वियवं त्र्यङ्गुलं खनेत् ॥१४०१॥
मुखाग्रकण्ठयोरस्या वेदीत्र्यंशेन विस्तृतिः ।
कनिष्ठाङ्गुलिविस्तीर्णा घृतनिर्गमपद्धतिः ॥१४०२॥
मेखला द्व्यङ्गुला वृत्ता स्रुवायामो जिनाङ्गुलः ।
द्वाविंशत्यङ्गुलो दण्डो वृत्तमस्य कृताङ्गुलम् ॥१४०३॥
कार्षिको द्व्यङ्गुलः खातः पङ्के मृगपदाकृतिः ।
मूले चाग्रे च दण्डस्य गण्डीकङ्कणवद्भवेत् ॥१४०४॥
श्रीपर्णी शिंशिपादारुबीजकाम्रविकङ्कताः ।
स्रुचि वृक्षाः प्रशस्यन्ते किंशुकाद्याश्च याज्ञियाः ॥१४०५॥
सूर्यादिग्रहशान्त्यर्थं समिधोऽर्कपलाशजाः ।
खदिराश्वत्थपामार्गपिप्पलोदुम्बरोद्भवाः ॥१४०६॥
शमीदूर्वाङ्कुशोद्भूता अष्टादशतोन्मिताः ? ।
आहरेत यथासंख्यं तदभावे यवांस्तिलान् ॥१४०७॥
एतानि विष्टरादीनि प्रतिकुण्डं निवेशयेत् ।
गृहोपकरणं यच्च स्थालीं .... पिधानकम् ॥१४०८॥
मुसलोलूखले खड्गं छुरिकाच्छत्रचामरे ।
शिरोपेत.............. यन्त्रिकापादुकायुगम् ॥१४०९॥
दर्पणं पूगपात्रं च सिन्दूराञ्जन.............. ।
.............. योगपट्टं पट्टं च विनिवेशयेत् ॥१४१०॥
स्थानेऽधिवासे पूजायां प्रतिष्ठायां च वाससाम् ।
दद्याद्युग्मानि देवाय शूलवेदीवृषाय च ॥१४११॥

मुद्रामुकुटवासादिहारकुण्डलकङ्कणम् ।
कुर्यादाचारपूजार्थं वित्तशाठ्यविवर्जितः ॥१४१२॥
उत्पादपादहीनांशमूर्तिभृदस्त्रजापिनाम् ।
पूजा स्याज्जापिभिस्तुल्या विप्रदैवज्ञशिल्पिनाम् ॥१४१३॥
वज्रार्ककान्तनीलातिनीलमुक्ताफलानि च ।
पुष्पपद्मादिरागौ च वैदूर्यं रत्नमुत्तमम् ॥१४१४॥
उशीरमाधवाक्रान्तारक्तचन्दनकागुरुम् ।
श्रीखण्डं शारिवां कुष्टं शंखिनीत्योषधीगणः ॥१४१५॥
हेमताम्रमयो वङ्गं तारसारं सकांस्यकम् ।
पन्नगं चेति लोहानि हरितालं मनःशिलाम् ॥१४१६॥
तोरिकं हंसमाचीकं पारतं वह्निगैरिकम् ।
गन्धकोऽभ्रकमित्यष्टौ धातवो व्रीहयस्तथा ॥१४१७॥
गोधूमान्सतिलान्माषान्मुद्गानप्याहरेद्यवान् ।
नीवारं श्यामकानेवं व्रीहयोऽष्टौ प्रकीर्तिताः ॥१४१८॥
एतत्पञ्चाष्टके भावे पञ्चद्रव्यान्युपाहरेत ।
फेरुकं सहदेवां च स्वर्णं तालं यवान्क्रमात् ॥१४१९॥
हेरुकं सहदेवां च स्वर्णं तालं यवान्क्रमात् (१)।
सर्वेषां तु यदाभावः पारतं हेम वा तथा। ॥१४२०॥
कूर्मभूवृषपद्मानामेकं होमादिनिर्मितम् ।
हास्तिके मासिकं कुर्याद्वृद्ध्यैकोत्तरया ततः ॥१४२१॥

१ 'रङ्गं' क. पाठः ।

ज्येष्ठलिङ्गे ग्रहैर्मासैरिति सर्वं समाहरेत् ॥१४२२॥
स्नात्वा नित्यद्वयं कृत्वो प्रणवार्घकरो गुरुः ।
मूर्तिभिर्जापिभिर्विप्रैः सह गच्छन्मखालयम् ॥१४२३॥
शान्त्यादींस्तोरणांस्तत्र पूर्ववत्पूजयेत्क्रमात् ।
प्रदक्षिणक्रमादेषा शाखयोर्द्वारपालकान् ॥१४२४॥
प्राचि नन्दिमहाकालौ याम्ये भृङ्गेशनायकौ ।
.................... वारुणे वृषभास्करौ ॥१४२५॥
तच्छाखामूलदेशस्थौ प्रशान्तशिशिरौ घटौ ।
.................... भूतसंजीवनामृतौ ॥१४२६॥
धनदा श्रीप्रदौ द्वौ द्वौ पूजयेदनुपूर्वशः ।
स्वनामभिश्चतुर्थ्यन्तैः प्रणवादिनमोऽन्तगैः ॥१४२७॥
लोकग्रहवसुद्वास्थस्रवन्त्येनं द्वयं द्वयम् ।
भानुत्रयमगौ वेदौ लक्ष्मीर्गणपतिस्तथा ॥१४२८॥
इति देवा मुखागारे तं तिष्ठन्ति प्रतिष्ठितम् ।
विघ्नसंघापनोदाय जाताः संरक्षणाय च ॥१४२९॥
ध्वजं शक्तिं तथा दण्डं खड्गं पाशं तथा गदाम् ।
त्रिशूलं चक्रमम्भोजं पताकामर्चयेत्क्रमात् ॥१४३०॥
ॐ हूं हः वज्राय हूं फट् इत्यादिमन्त्रैः ।
कुमुदः कुमुदाक्षश्च पुण्डरीकोऽथ वामनः ।
शङ्कुकर्णस्तथा पद्मनेत्रः सुमुखसंज्ञकः ॥१४३१॥
सुप्रतिष्ठितनामा च ध्वजानामष्ट देवताः ।

पूज्याः पूर्वादिकाष्ठासु भूतकोटिभिरावृताः ॥१४३२॥
ॐ कुमुदाय नमः, इत्यादिमन्त्राः ।
हेरुकं त्रिपुरघ्नं च वह्न्याख्यं यमजिह्वकम् ।
कालं करालिनं षष्ठमेकजिह्वं तथाष्टमम् ॥१४३३॥
तथैव पूजयेद्दिक्षु लोकपालाननुक्रमात् ।
बलिभिः कुसुमैर्दीपैः संतुष्टान्परिभावयेत् ॥१४३४॥
ततस्तु शेषु चन्येषु वंशस्थानेऽप्यनुक्रमात् ।
पञ्च क्षित्यादितत्त्वानि सद्योजातादिभिर्यजेत् ॥१४३५॥
सदाशिवपदव्यापि मण्डपं धामशङ्करम् ।
पातालशक्तिसंयुक्तं तत्त्वदृष्ट्यावलोकयेत् ॥१४३६॥
दिव्यन्तरिक्षभूमिस्थान्विघ्नानुत्सार्य पूर्ववत् ।
प्रविशेत्पश्चिमे द्वारे शेषद्वाराणि घट्टयेत् ॥१४३७॥
प्रदक्षिणक्रमाद्गत्वा निविष्टो वेदिदक्षिणे ।
उत्तराभिमुखः कुर्याद्भूतशुद्धिं यथा पुराः ॥१४३८॥
अन्तर्यागं विशेषार्घं मन्त्रद्रव्यादिशोधनम् ।
कुर्वीत स्वात्मनः पूजां पञ्चगव्यं च पूर्ववत् ॥१४३९॥
साधारं सकलमस्मिन्विन्यसेत्तदनन्तरम् ।
शेषाय शिवतत्त्वाय तत्त्वत्रयमनुक्रमात् ॥१४४०॥
ललाटपट्टपादान्तं शिवविद्यात्मकं परम् ।
रुद्रनारायणब्रह्मदैवतैर्निजशाम्बरैः ॥१४४१॥
ॐ हूँ आं मूर्तीस्तद्दोश्वरांस्तत्र पूर्ववद्विनिवेशयेत् ।

तद्व्यापकं शिवं साङ्गं शिवहस्तं च मूर्धनि ॥१४४२॥
ब्रह्मरन्ध्रप्रविष्टेन तेजसा बाह्यमान्तरम् ।
तेजःपटलमाहूय प्रद्योतितदिगन्तरम् ॥१४४३॥
आत्मानं मूर्तिपैः सार्धं स्रग्वस्त्रमुकुटादिभिः ।
भूषयित्वा शिवोऽस्मीति ध्यात्वा बोधासिमुद्धरेत् ॥१४४४॥
चतुष्पदान्तसंस्कारैः संस्कुर्यान्मखमण्डपम् ।
विक्षिप्य विकिरादीनि कुशकूर्च्योपसंहरेत् ॥१४४५॥
आसनीकृत्य वार्धन्या वास्त्वादीन्पूर्ववद्यजेत् ।
शिवकुम्भास्त्रवार्धान्योः पूजयेच्च स्थिरासने ॥१४४६॥
स्वदिक्षु कलशारूढांल्लोकपालाननुक्रमात् ।
नानायुधादिसंयुक्तान्पूजयेद्विधिना तथा ॥१४४७॥
ऐरावणं गजारूढं स्वर्णवर्णं किरीटिनम् ।
सहस्रनयनं शक्रं वज्रपाणिं विभावयेत् ॥१४४८॥
सप्तार्चिषं च बिभ्राणमक्षमालां कमण्डलुम् ।
ज्वालामालाकुलं[1] रक्तं शक्तिहस्तं शुकासनम् ॥१४४९॥
कृतान्तं महिषारूढं दण्डहस्तं भयानकम् ।
कालपाशधरं कालं ध्यायेद्दक्षिणदिक्पतिम् ॥१४५०॥
रक्तनेत्रं शवारूढं नीलोत्पलदलप्रभम् ।
कृपाणपाणिमस्रौघं पिबन्तं राक्षसेश्वरम् ॥१४५१॥
नरारूढं करालास्यं रक्षसाधृतविग्रहम् ।

---

१ 'लारक्तं' क.।

शशाङ्कधवलं ध्यायेद्वरुणं मकरासनम् ॥१४५२॥
आपीतहरितच्छायं विलोलध्वजधारिणम् ।
प्राणभूतं च भूतानां हरिणस्थं समीरणम् ॥१४५३॥
कुबेरं मेषमासीनं सगर्वं खर्वविग्रहम् ।
स्वर्णच्छायं गदाहस्तमुत्तराशापतिं स्मरेत् ॥१४५४॥
ईशानं वृषभारूढं त्रिशूलव्यालधारिणम् ।
शिरश्चन्द्रार्धधारिणं चन्द्रमौलिं त्रिलोचनम् ॥१४५५॥
अनन्तं पुण्डरीकाक्षं कूर्मारूढं प्रपूजयेत् ।
पीनं पीतं चतुर्बाहुं ब्रह्माणं चतुराननम् ॥१४५६॥
हंसयानं च बिभ्राणं दण्डाक्षस्रक्कमण्डलुम् ।
स्तम्भमूलस्थकुम्भेषु वेद्यां धर्मादिकान्यजेत् ॥१४५७॥
दिक्षु कुम्भेष्वनन्तादीन्पूजयन्त्यपि केचन ।
शिवाज्ञां श्रावयेत्कुम्भं भ्रमेदस्त्रालुपृष्ठतः ॥१४५८॥
पूर्ववत्प्रापयेदादौ कुम्भं तदनु वार्धनीम् ।
शिवं स्थिरासनं कुम्भे शस्त्रालुं चक्रवासने ॥१४५९॥
पूजयित्वा यथापूर्वं स्पृशेदुद्भवमुद्रया ।
निजयोगं जगन्नाथ रक्ष भक्तानुकम्पया ॥१४६०॥
इति संश्राव्य रक्षार्थं कुम्भे खड्गं निवेशयेत् ।
दीक्षास्थापनयोः कुम्भे स्थण्डिले मण्डलेऽथवा ॥१४६१॥
कुम्भ एव यजेदीशमित्युक्तं पिङ्गलामते ।
अथ मण्डलमार्गोऽपि मनागुद्दिश्यते यथा ॥१४६२॥

तन्मध्येऽष्टदलं पद्मं तस्यांशे कर्णिकादिमे ।
द्वितीये केसराणि स्युस्तृतीये दलसन्धयः ॥१४६३॥
चतुर्थे तु दलाग्राणि गात्राणि दलसन्धयः ।
चतुरङ्गुलकाः कार्या यथाशोभं यथाक्रमम् ॥१४६४॥
दलाग्रादङ्गुलं त्यक्त्वा प्रतिवारणमण्डलम् ।
समन्तादङ्गुलार्धेति विधातव्यं विचक्षणैः ॥१४६५॥
आसने देवदेवस्य वीथ्यादिसहिते क्वचित् ।
द्वारमाना भवेच्छोभा तदर्धेन कपोलकौ ॥१४६६॥
श्वेतं रक्तं रजः कृष्णं क्षिपेत्पीतं विधानतः ।
केसराणि दलाग्राणि गात्रकाणि दलानि च ॥१४६७॥
कुर्वन्ति त्र्यङ्गुलान्यन्ये कर्णिकांशषडङ्गुलम् ।
तत्र संपूज्य देवेशं वज्राद्यैः कुम्भसंनिधौ ॥१४६८॥
कुण्डनाभिं पुरस्कृत्य निविष्टा मूर्तिधारिणः ।
गुरोरादेशतः कुर्युर्निजकुम्भस्य संस्कृतोः ॥१४६९॥
जपेयुर्जापिनः साङ्गमस्त्रमन्येऽपि संस्कृतम् ।
पठेयुर्ब्राह्मणाः शान्तिं स्वशाखावेदपारगाः ॥१४७०॥
श्रीसूक्तं पावमानीं[1] च नासदाख्यं सवाजिनम् ।
वामदेवश्च ऋग्वेदी पैतृकं च वृषाकपिम् ॥१४७१॥
संयतः सर्वदिग्भागे सेर्वमेतत्समुच्चरेत् ।
देवव्रतं च भारुण्डं ज्येष्ठसाम रथन्तरम् ॥१४७२॥
पुरुषं गतिमेतानि सामवेदी तु दक्षिणे ।

१ 'नीयं' क. ।

रुद्रं पुरुषसूक्तं च श्लोकाध्यायं च सुश्रुतम् ॥१४७३॥
ब्राह्मं तु पैत्रमैन्द्रं च पश्चिमायां समुच्चरेत् ।
आचार्यस्त्वग्निमुत्पाद्य प्रतिकुण्डं प्रदापयेत् ॥१४७४॥
वह्नेः पूर्वादिकान्भागान्पूर्वकुण्डादिभिः क्रमात् ।
दीपधूपं चरूणां च कृते वह्निं समुद्धरेत् ॥१४७५॥
पूर्ववच्छिवमभ्यर्च्य शिवाग्नौ मन्त्रतर्पणम् ।
देशकालादिसंपत्तेर्दुर्निमित्तप्रशान्तये ॥१४७६॥
होमं कृत्वा तु मन्त्रज्ञः पूर्णां दत्त्वा शुभावहाम् ।
पूर्ववच्चरुकं कृत्वा प्रतिकुण्डं निवेदयेत् ॥१४७७॥
पूर्वोक्ताभरणाद्यैश्च यजमानेन पूजिताः ।
प्रहृष्टमनसः सर्वे व्रजेयुः स्नानमण्डपम् ॥१४७८॥
भद्रपीठे सपद्माङ्के प्राग्वेद्यां प्रणवासने ।
विधाय तत्र देवेशं ताडयित्वावगुण्ठयेत् ॥१४७९॥
स्नापयेत्पूजयित्वा तु मृदा काषायवारिणा ।
गोमूत्रैर्गोमयेनापि वारिणा चान्तरात्मना ॥१४८०॥
भस्मना गन्धतोयेन फडन्तास्त्रेण वारिणा ।
देशिको मूर्तिपैः सार्धं कृत्वा च करशोधनम् ॥१४८१॥
वर्मजप्तेन संच्छाद्य पीतवर्णेन वाससा ।
संपूज्य सितपुष्पैश्च नयेदुत्तरवेदिकाम् ॥१४८२॥
तत्र दत्तासनायां तु शय्यायां संनिवेश्य च ।
कुङ्कुमालिप्तसूत्रेण विभज्य गुरुणा लिखेत् ॥१४८३॥

शलाकया सुवर्णस्य शास्त्रदृष्टेन कर्मणा ।
कृतकर्मा च शस्त्रेण लक्ष्म शिल्पी समुत्किरेत् ॥१४८४॥
त्र्यश्राद्धोऽथवा पादा अर्चाया अर्धतोऽथवा ।
सर्वकामप्रसिद्ध्यर्थं शुभलक्ष्मावतारकम् ॥१४८५॥
लिङ्गदैर्ध्यप्रमाणेन त्रिभक्तैर्भाववर्जनात् ।
विस्तारो लक्ष्म देवस्य तेन लिङ्गेषु सर्वतः ॥१४८६॥
यवस्थान्नं ....... भागैरष्टभिराश्रितम् ।
हास्तिके लक्ष्मलेखा च गाम्भीर्याद्विस्तरादपि ॥१४८७॥
एवमष्टांशवृद्ध्यन्तलिङ्गेषु द्विकरादिषु ।
भवेदष्टयवा पृथ्वी गम्भीरा नवहास्तिके ॥१४८८॥
सान्तरेषु च लिङ्गेषु पादवृद्धेषु सर्वतः ।
लक्ष्म देहस्य विष्कम्भो भवेद्द्वियववर्धनात् ॥१४८९॥
गम्भीरत्वपृथुत्वाभ्यां रेखापि त्र्यंशवृद्धितः ।
पूर्वेषु च भवेल्लक्ष्म लिङ्गमस्तकमस्तकम् ॥१४९०॥
लक्ष्मक्षेत्रेऽष्टधा भक्ते मूर्ध्नि भागद्वयाच्च्युते (?) ।
षड्भागपरिवर्तेन मुक्त्वा भागद्वयं त्वधः ॥१४९१॥
रेखात्रयेण संबन्धं कारयेत्पृष्ठदेशतः ।
बहुविधोऽयमन्यत्र सकृदत्रोपदर्शितः ॥१४९२॥
रत्नजे लक्षणोद्धारो न रौहे न सरिद्भवे ।
ईशानाचललोहेषु न दृष्टः क्वचिदागमे ॥१४९३॥
स्वरूपलक्षणं तेषां प्रभारत्नेषु निर्मलम् ।
नयनोन्मीलनं व्यक्ते संनिधानाय लक्ष्म तत् ॥१४९४॥

लवणोद्धाररेखा च घृतेन मधुना तथा ॥१४९५॥
मृत्युञ्जयेन संपूज्य शिल्पिदोषनिवृत्तये ।
अर्चयेच्च ततो लिङ्गं स्नापयित्वा मृदादिभिः ॥१४९६॥
मुद्रिकापात्रशय्याभिर्वासोभिश्च शलाकया ।
शिल्पिनस्तोषयित्वा तु दत्त्वा गां गुरवे शुभाम् ॥१४९७॥
समभ्यर्च्य ततो लिङ्गं धूपदीपाक्षतादिभिः ।
गायन्त्यो मङ्गलं नार्यो जीवत्पुत्राः सभर्तृकाः ॥१४९८॥
सव्येन चापसव्येन सूत्रेण च कुशेन वा ।
स्पृष्ट्वा च रोचनां दत्त्वा कुर्युर्निर्भर्त्सनादिकम् ॥१४९९॥
गुडलवणधान्याकदानेन विसृजेत्ततः ।
गुरुस्तु मूर्तिपैः सार्धं हृदा वा प्रणये(वे)न वा ॥१५००॥
मृत्स्नागोमयगोमूत्रैर्भस्मभिः सलिलान्तरम् ।
स्नापयेत्पञ्चगव्येन पञ्चामृतपुरःसरम् ॥१५०१॥
विरूक्षणैः कषायैश्च सर्वौषधिजलेन च ।
शुभपुष्पफलैः स्वर्णरत्नशृङ्गोदकेन च ॥१५०२॥
तथा धारासहस्रेण दिव्यौषधिजलेन च ।
तीर्थोदकेन साङ्गेन चन्दनेन च वारिणा ॥१५०३॥
क्षीरार्णवादिभिः कुम्भैः शिवकुम्भजलेन च ।
त्रिरूक्षणं तथा कृत्वा सुगन्धैश्चन्दनादिभिः ॥१५०४॥
संपूज्य ब्रह्मभिः पुष्पैर्वर्मणा रक्तचीवरैः ।
बहुरूपेण नीराज्य रक्षातिलकपूर्वकम् ॥१५०५॥
गीतवाद्यप्रभृतिभिर्ब्रह्मघोषादिमङ्गलैः ।

नीरचोरकुशाग्रादिद्रव्यैरर्चादिसूचकैः ॥१५०६॥
जयस्तुत्यादिभिस्तुष्टमर्घयेत्पुरुषाणुना ।
समाचम्य हृदा देवं ब्रूयादुत्थीयतां विभो ॥१५०७॥
देवं रथे समारोप्य मण्डपेश्वर एववा ।
आचार्यः प्रोक्षिते देशे धर्मकारी रथाग्रतः ॥१५०८॥
व्रजन् शिल्प्यादिभिः सार्धं रथमार्गानुसारिभिः ।
हिरण्यकांस्यवासांसि सप्तव्रीहिकपैतृकान् ॥१५०९॥
कुसुमानि सुगन्धीनि गीतवाद्यादिमङ्गलैः ।
क्षिपन्वित्तानुसारेण परिभ्राम्यानयेत्ततः ॥१५१०॥
पश्चिमं मण्डपद्वारं तत्र भद्रासने स्थितम् ।
हृदा संपूज्य देवेशं कृते स्वस्त्ययने सति ॥१५११॥
प्रविश्य वेदिकामध्ये खट्वायां पट्टकेऽथवा ।
विन्यस्य तूलिके तत्र सोपधाने सुवेण च ॥१५१२॥
शक्त्यादिशक्तिपर्यन्ते विन्यसेदासने शुभे ।
प्रासादे पश्चिमास्ये च मध्यात्पूर्वाश्रिता दिशम् ॥१५१३॥
पश्चिमे पिण्डिकां तस्य न्यसेद्ब्रह्मशिलां ततः ।
पूर्वास्ये च भवेत्तस्मिन्सर्वमेतद्विपर्ययात् ॥१५१४॥
अस्य मन्त्रशतालब्धं निद्राकुम्भं शिवासनम् ।
प्रकल्प्य शिवकोणे च दत्त्वार्घं हृदयेन च ॥१५१५॥
उत्थाप्योक्तासने लिङ्गं शिरसा पूर्वमस्तकम् ।
समारोप्य न्यसेत्तस्मिन्दृष्टे ब्रह्मणि चन्दनम् ॥१५१६॥
दद्याद्धूपं च संपूज्य तथा वासांसि वर्मणा ।

नैवेद्यं च यथोद्दिष्टं गृहोपकरणादिकम् ॥१५१७॥
एतद्ग्रहादितत्सर्वं हृदा दद्यात्स्वशक्तितः ।
घृतक्षौद्रयुतं पात्रमभ्यङ्गाय पदान्तिके ॥१५१८॥
देशिकश्च स्थितस्तत्र षट्त्रिंशत्तत्त्वसञ्चयम् ।
शक्त्यादिभूमिपर्यन्तं सतत्त्वाधिपसंयुतम् ॥१५१९॥
विन्यस्य पुष्पमालाभिस्त्रिखण्डं परिकल्पयेत् ।
मायासदेशशक्तयन्त ..... ॥१५२०॥
तत्रात्मतत्त्वं विद्याख्यं शिवं सृष्टिक्रमेण च ।
एकशः प्रविभागेषु ब्रह्मविष्णुहराधिपान् ॥१५२१॥
विन्यस्यमूर्तिमूर्तीशान्पूर्वादिक्रमतो यथा ।
क्ष्मावह्नियजमानार्कजलवायुनिशाकरान् ॥१५२२॥
शर्वं पशुपतिं चोग्रं भवं रुद्रमथेश्वरम् ।
महादेवं च भीमं च मन्त्रास्तद्वाचका इमे ॥१५२३॥
यरसषवयाश्चैव हकारश्च त्रिमात्रिकः ।
प्रणवो हृदयाणुर्वा मूलमन्त्रोऽथवा क्वचित् ॥१५२४॥
पञ्चकुण्डान्तिके योगे मूर्तीः पञ्चाथवा न्यसेत् ।
पृथिवीजलतेजांसि वायुराकाश एव च ॥१५२५॥
क्रमात्तदधिपांश्चात्र ब्रह्माणं धरणीधरम् ।
रुद्रमीशं सदाख्यं च सृष्टिन्यासेन मन्त्रवित् ॥१५२६॥
मुमुक्षोर्वा निवृत्त्याद्या अजाताद्यास्तदीश्वराः ।
त्रितत्त्वं वाथ सर्वत्र न्यस्येद्व्याप्त्या सकारणम् ॥१५२७॥
शुद्धे वाध्वनि विद्येशा अशुद्धे लोकनायकाः ।

पञ्चत्रिंशत्तथैवाष्टौ पञ्च त्रीणि यथाक्रमम् ॥१५२८॥
एषां तत्त्वं तदेशानां मन्त्रा दिङ्मात्रतो यथा ।

हां शक्तितत्त्वाय नमः, ओं हां शक्तितत्त्वाधिपाय नमः, इत्यादि । ओं हां क्ष्मामूर्तये नमः, ओं हां क्ष्मामूर्त्यधिपतये ब्रह्मणे नमः, ओं हां शिवतत्त्वाय नमः, ओं हां शिवतत्त्वाधिपतये रुद्राय नमः ।

नाभिकन्दात्समुच्चार्य घण्टानादविसर्पिणम् ॥१५२९॥
ब्रह्मादिकारणत्यागाद्द्वादशान्तसमाश्रितम् ।
मन्त्रं च मनसा भिन्नं प्राप्नानक्षरमोद्भमात् (?) ॥१५३०॥
द्वादशान्तात्समानीय निष्कलं व्यापकं शिवम् ।
अष्टात्रिंशत्कलोपेतं सहस्रकिरणोज्ज्वलम् ॥१५३१॥
सर्वशक्तिमयं साङ्गं ध्यात्वा लिङ्गे निरोधयेत् ।
जीवन्यासो भवेदेवं लिङ्गे सर्वार्थसाधकः ॥१५३२॥
पिण्डिकादिषु च न्यासं ......संपदस्तथा ॥
पिण्डिकां च कृतस्नातां विलिप्तां चन्दनादिभिः ॥१५३३॥
पञ्चरत्नादिसंयुक्तां लिङ्गस्योत्तरतः स्थिताम् ।
लिङ्गवत्कृतविन्यासां विधिवत्तु प्रपूजयेत् ॥१५३४॥
कृतस्नानादिकांस्तद्वल्लिङ्गमूले शिवं न्यसेत् ॥ ।
कृतस्नानादि संस्कारं शक्त्यन्तं वृषभं यथा ॥१५३५॥
प्रणवपूर्वं हां हूं हीं मध्यादिन्यतमेन च ।
क्रियाशक्तिनिभां पिण्डीं शिलामाधाररूपिणीम् ॥१५३६॥
भस्मदर्भतिलैः कुर्यात्प्राकारत्रितयं ततः ।

रक्षायै लोकपालांश्च सायुधान्पूजयेत्ततः ॥१५३७॥

ॐ ह्रीं क्रियाशक्तये नमः, ओं ह्रीं महागौरि रुद्रदयिते स्वाहा इति वा पिण्डिकायां, ओं ह्रीं आधारशक्तये नमः, ॐ ह्रां वृषभाय नमः ।

धारिकां दीप्तामत्युग्रां ज्योत्स्नामेतां बलोत्कटाम् ।
तथा धात्रीं धरित्रीं च न्यसेद्वा पञ्च नायिकाः ॥१५३८॥
वामा ज्येष्ठा क्रिया ज्ञाना हीच्छा तिस्रोऽथवा न्यसेत् ।
क्रिया ज्ञाना तथेच्छा च पूर्ववच्छान्तिभुक्तिषु ॥१५३९॥
तमा मोहा क्षुधा निद्रा मृत्युर्मायो जराभया ।
पञ्चाथवा तमा मोहाघोरा रतिरपज्वरा ॥१५४०॥
तिस्रोऽथवा क्रिया ज्ञाना तथेच्छा वाधिनायिकाः ।
आत्मादिषु त्रितत्त्वेषु तीव्रमूर्तिषु विन्यसेत् ॥१५४१॥
अत्रापि पिण्डिकाब्रह्मशिलादिषु यथाविधि
शौर्यादिशम्बरैरेव पूर्ववत्सर्वमाचरेत् ॥१५४२॥
एवं विधाय विन्यासं गत्वा कुण्डान्तिकं ततः ।
कुण्डमध्ये परेशानं मेखलासु चतुष्करम् ॥१५४३॥
क्रियाशक्तिं तथा नाभौ नादं चोर्ध्वे च विन्यसेत् ।
घटस्थण्डिलवह्नीशैर्नारीशम्बरकं तथा ॥१५४४॥
पद्मतन्तुसमां शक्तिं तद्गतेन समुद्गताम्
पुनश्च शून्यमार्गेण विशन्तीं तस्य चिन्तयेत् ॥१५४५॥
एवं सर्वत्र सन्धेयं मूर्तिपैश्च परस्परम्
संपूज्याधारिकां शक्तिं कुण्डे संतर्प्य च क्रमात् ॥१५४६॥

तत्त्वतत्त्वेश्वरौ मूर्ती मूर्तीशांश्च घृतादिभिः।
संपूज्य तर्पयित्वा तु सहितौ सन्निधाणुभिः ॥१५४७॥
शतं सहस्रमेवं वा पूजायां सह होमयेत्।
तत्त्वतत्त्वेश्वरौ मूर्तीमूर्तीशांश्च स्वकांस्ततः ॥१५४८॥
........................ जुहुयान्मूर्तिपानपि।
ततो ब्रह्मभिरङ्गैश्च द्रव्यकालानुरोधतः ॥१५४९॥
संतर्प्य शान्तिकुम्भाम्भःप्रोक्षितं कुशमूलतः।
लिङ्गमूलं च संस्पृश्य जपेयुर्होमसंख्यया ॥१५५०॥
संनिधानं हृदा कुर्याद्वर्मणा रोधगुण्ठने।
एवं संशोध्य ब्रह्माणं विष्णुं चापि विशुद्धये ॥१५५१॥
विधाय पूर्ववत्सर्वं होमसंख्याजपादिकम्।
कुशमध्याग्रयोगेन लिङ्गमध्याग्रगं स्पृशेत् ॥१५५२॥
यथा यथा च संधानं तदिदानीं निगद्यते।
ओं हां हां वा, ओं ओं ओं वा, ओं लूं लूं वा, क्ष्मामूर्तये नमः।
ओं हां हां वा, ओं ओं ओं वा, ओं रूं रूं वा, वह्निमूर्तये नमः।
एवं यजमानमूर्तिमपि संधाय
पञ्चमूर्त्यात्मकेऽप्येवं संधानं हृदयादिभिः।
मूलेन स्वीयबीजैर्वा ज्ञेयं तत्त्वत्रयात्मकम् ॥१५५३॥
शिलापिण्डे वृषेऽप्येवं पूर्णाच्छिन्नैः स्वशम्बरैः।
भागभागविशुद्ध्यर्थं होमं कुर्याच्छतादिकम् ॥१५५४॥
न्यूनातिदोषशान्त्यर्थं शिवेनाधिष्ठितं शिवम्।
हुत्वाथ यत्कृतं कर्म शिवस्रोते निवेदयेत् ॥१५५५॥

एतत्समर्थितं कर्म त्वच्छक्त्यैव मया प्रभो ।
नमो भगवते रुद्राय रौद्र रौद्र नमोऽस्तु ते ॥१५५६॥
विधिपूर्वमपूर्वं वा स्वशक्त्या शर्व गृह्यताम् ।
ॐ श्रीं शंकरि पूरय स्वाहा, इति पिण्डिकायाम् ।
इति लिङ्गे न्यसेज्ज्ञानी क्रियाख्यां पीठविग्रहे ॥१५५७॥
आधाररूपिणीं शक्तिं न्यसेद्ब्रह्मशिलोपरि ।
निरुद्धां सप्तरात्रं वा पञ्चरात्रं त्रिरात्रकम् ॥१५५८॥
एकरात्रमथो वापि यद्वा सद्योधिवासनम् ।
विनाधिवासनं यागः कृतोऽपि न फलप्रदः ॥१५५९॥
स्वमन्त्रैः प्रत्यहं देवमाहुतीनां शतं शतम् ।
शिवकुम्भादि पूजां च दिग्बलिं च निवेदयेत् ॥१५६०॥
श्रीमत्सोमशिवेनायमधिवासविधिः कृतः ।
प्रातर्नित्यविधिं कृत्वा द्वारपालप्रपूजनम् ॥१५६१॥
प्रविश्य वाग्विधानेन देहशुद्ध्यादिमाचरेत् ।
दिक्पतींश्च समभ्यर्च्य शिवकुम्भं च वर्धनीम् ॥१५६२॥
अष्टपुष्पिकयासार्धं.......................... ।
शिवाज्ञातस्ततो गच्छन्प्रासादं शस्त्रमुच्चरन् ॥१५६३॥
उद्गतान्प्रक्षिपेद्विघ्नान् हुंफडन्तशराणुना ।
न मध्ये स्थापयेल्लिङ्गं वेददोषविशङ्कया ॥१५६४॥
तस्मान्मध्यं परित्यज्य यवार्धेन यवेन वा ।
किंचिदीशानमाश्रित्य शिलामध्ये निवेशयेत् ॥१५६५॥
मलेन तास्त्वनन्ताख्यां सर्वाधाराधाररूपिणीम् ।

ॐ नमो व्यापिनि स्थिरे अचले ध्रुवे लं ह्रीं स्वाहा ।
त्वया शिवाज्ञया शक्रे स्थातव्यमिह सन्ततम् ।१५६६॥
इत्युक्त्वा च समभ्यर्च्य निरुद्ध्याद्रोधमुद्रया ।
वज्रादीनि च रत्नानि तथौशीरादिकौषधीः ॥१५६७॥
लोहान्हेमादिकान्धातून्हरितालादिकं तथा ।
धान्यप्रभृतिसस्यांश्च पूर्वमुक्तानतुक्रमात् ॥१५६८॥
प्रभारोग्यत्वदेहत्वतृप्तिशक्तिमनामयम् ।
भावयन्नेकचित्तस्तु लोकपालेशशम्बरैः ॥१५६९॥
पूर्वादिवसुगर्तेषु न्यसेदेकैकशः क्रमात् ।
हेमजं ताम्रजं कूर्मं वृषं वा द्वारसंमुखम् ॥१५७०॥
सरित्नादैः समायुक्तं पदे नदमृदाश्च वा ।
प्रक्षिपेन्मध्यगर्तायां यद्वा मेरुं सुवर्णजम् ॥१५७१॥
मधूकाज्यतसंयुक्तमञ्जनेन समन्वितम् ।
पृथिवीं राजतीं यद्वा यद्वा हेमसमुद्भवाम् ॥१५७२॥
सर्वबीजसमायुक्तां सुवर्णाढ्यां विनिक्षिपेत्
सुवर्णकुसरायुक्तं पद्मं वानन्ततो न्यसेत् ॥१५७३॥
देवदेवस्य शक्त्यादिशक्तिपर्यन्तमासनम् ।
प्रकल्प्य पायसेनाथ लिप्त्वा गुग्गुलुनाथवा ॥१५७४॥
श्वभ्रमाच्छाद्य वस्त्रेण तनुत्रेणास्त्ररक्षितम् ।
दिक्पतिभ्यो बलिं दत्त्वा समाचान्तस्तु देशिकः ॥१५७५॥
शिखया वा शिखास्त्रमङ्गदोषनिवृत्तये ।
शस्त्रेण च ......... मस्य जुहुयात्पूर्णया सह ॥१५७६॥

एकैकाहुतिदानेन संतर्प्य इष्टदेवताः ।
समुद्रोद्दृष्टहृदा चैवमानयेन्मङ्गलादिभिः ॥१५७७॥
गुरुर्देवाग्रतो गच्छेन्मूर्तिपैः सुहृदि स्थितैः ।
बन्धुभिः सह धर्माय देवयानस्य पृष्ठतः ॥१५७८॥
प्रासादा दिपरिभ्रम्य भद्राख्ये द्वारसंमुखम् ।
लिङ्गं संस्थाप्य दत्तार्घं प्रासादं च प्रवेशयेत् ॥१५७९॥
द्वारेण द्वारबन्धेन द्वारदेशेन तद्विना ।
द्वारबन्धशिलाशून्ये तदूर्ध्वेनाथ उच्यते ॥ १५८०॥
वर्जयेद्द्वारसंस्पर्शद्वारेण च महेश्वरम् ।
देवगृहसमारम्भं कोणेनापि प्रवेशयेत् ॥१५८१॥
अयमेव विधिर्ज्ञेयो व्यक्तलिङ्गेऽपि सर्वतः ।
गृहोपवेशनं द्वारलोकैरपि समीक्षितम् ॥१५८२॥
अथद्वारप्रवेशेन विदुर्गोऽत्र क्षयं गतः ।
तत्कर्तुश्च विना शान्तिमतः शान्तिं समाचरेत् ॥१५८३॥
जीर्णादिदोषदुष्टः स्यादपद्वारे विनिर्गतम् ।
अथ पीठे च संस्थाप्य लिङ्गद्वारस्य संमुखम् ॥१५८४॥
तूर्यमङ्गलनिर्घोषैर्दूर्वाक्षतसमन्वितम् ।
संमुत्तिष्ठ हृदेत्युक्त्वा महापाशुपतं पठन् ॥१५८५॥
अपनीय घटं श्वभ्राद्देशिको मूर्तिपैः सह ।
यन्त्रस्थं कारयित्वा च विलिप्तं कुङ्कुमादिभिः ॥१५८६॥
शक्तिशक्तिमतो रैक्यं ध्यात्वालम्बनलक्षितम् ।
लयान्तं मन्त्रमुच्चार्य स्पृष्ट्वा श्वभ्रे निवेशयेत् ॥१५८७॥

त्र्यंशेन ब्रह्मभागस्य यद्वा त्र्यंशद्वयेन च ।
अर्धेनार्धाष्टमांशेन सर्वस्याथ प्रवेशनम् ॥१५८८॥
विधायामीभिर्दीर्घाभिः ........... सुसमाहितः ।
श्वभ्रं वालुकयापूर्य भवेदिति ॥१५८९॥
ततो लिङ्गे स्थिरीभूते ध्यात्वा सकलरूपिणम् ।
मूलमुच्चार्य शक्त्यन्तं स्पृष्ट्वा तं निष्कलं न्यसेत् ॥१५९०॥
स्थाप्यमानं यदा लिङ्गं यां यां दिशमुपाश्रयेत् ।
तावद्दिगीशमन्त्रेण पूर्णान्तं दक्षिणान्वितम् ॥१५९१॥
शब्दोत्थाने च वक्त्रेण भ्रान्तेन स्फुटितोऽपि च ।
जुहुयान्मूलमन्त्रेण बहुरूपेण वा शतम् ॥१५९२॥
किं चान्येष्वपि देशेषु शिवशान्ति समाश्रयेत् ।
उक्तन्यासविधिं लिङ्गे कुर्वन्नेवं ......... व तत् ॥१५९३॥
पीठबन्धमतः कृत्वा लक्षणस्पर्शलक्षणम् ।
गौरीमन्त्रालयं नीत्वा स्पृष्ट्वा पिण्डे च विन्यसेत् ॥१५९४॥
संपूर्य पाशसन्धिं च वालुकावज्रलेपतः ।
ततो मूर्तिधरैः सार्धं गुरुः शान्तिघटार्घतः ॥१५९५॥
संस्नाप्य कलशैरन्यैस्तद्वत्पञ्चामृतादिभिः ।
विलिप्तैश्चन्दनाद्यैश्च संपूज्य जगदीश्वरम् ॥१५९६॥
उमामहेशमन्त्राभ्यां तां स्पृशेल्लिङ्गमुद्रया ।
ततस्त्रितत्त्वविन्यासं षडध्वादिपुरःसरम् ॥१५९७॥
कृत्वा मूर्ति दिगीशानामङ्गानां ब्रह्मणा सह ।
ज्ञानां लिङ्गे क्रियां पीठे विन्यस्य स्नापयेत्ततः ॥१५९८॥

सघृतं गुग्गुलं दत्त्वा व्यापित्वेन शिवं न्यसेत् ।
स्रग्धूपदीपनैवेद्यं हृदयेन फलानि च ॥१५६६॥
हृदयेन यथाशक्त्या समाचम्य महेश्वरि ।
दत्त्वार्घं च जपं कृत्वा निवेश्य वरदे वरे ॥१६००॥
चन्द्रार्कतारकं यावन्मूर्तीशैर्मूर्तिपैः सह ।
स्वेच्छयैव जगन्नाथ स्थातव्यमिह मन्दिरे ॥१६०१॥
प्रणम्यैनं बहिर्गत्वा हृदा वा प्रणवेन वा ।
संस्थाप्य वृषभं पश्चात्पूर्ववद्बलिमाचरेत् ॥१६०२॥
न्यूनादिदोषमोषार्थं ततो मृत्युजितागतम् ।
शिवेन समिधो दत्त्वा शान्त्यर्थं पायसेन वा ॥१६०३॥
ज्ञानाज्ञानकृतं यत्तु तत्पूरय महाविभो ।
हिरण्यपशुभूम्यादिगीतवाद्यादि हेतवे ॥१६०४॥
अमुकेशाय तद्भक्त्या शक्त्या सर्वं निवेदयेत् ।
दानं महोत्सवं पश्चात्कुर्याद्दिनचतुष्टये ॥१६०५॥
त्रिसन्ध्यं त्रिदिनं मन्त्री होमयेन्मूर्तिपैः सह ।
चतुर्थेऽहनि संपूर्णं चरुकं बहुरूपिणा ॥१६०६॥
कुर्वीत सर्वकुण्डेषु संपाताहुतिशोधितम् ।
दिनचतुष्टयीं यावन्न निर्माल्यं तदूर्ध्वतः ॥१६०७॥
निर्माल्यापनयं कृत्वा स्नापयित्वा प्रपूजयेत् ।
प्रथमं मातृलिङ्गेषु कार्या साधारणाणुभिः ॥१६०८॥
विहाय लिङ्गमध्ये तु कुर्याच्चाणुविसर्जनम् ।
आवाहनमभिव्यक्तिर्विसर्गः शिवरूपतः ॥१६०९॥

प्रतिस्थाने रुचि ........ स्थिराद्याहुतिसप्तकम् ।
स्थिरस्तथाप्रमेयश्चानादिबोधस्तथैव च ॥१६१०॥
नित्यश्च सर्वगश्चैव विनो श्रीतृप्त एव च ।
एते गुणा महेशस्य संनिधानाय कीर्तिताः ॥१६११॥
ॐ नमः शिवाय स्थिरो भव नमः स्वाहा, इत्याद्याहुतिक्रमः।
एवमेतच्च संपाद्य निधाय शिवकुम्भवत् ।
कुम्भद्वयं च तन्मध्यादेककुम्भाम्भसा भवेत् ॥१६१२॥
संस्नाप्य तद्द्वितीयं तु कर्मस्थानाय धारयेत् ।
दत्त्वा बलिं समाचम्य बहिर्गच्छेच्छिवाज्ञया ॥१६१३॥
यागतो बाह्यतश्चण्डमैशान्यां दिशि मन्दिरे ।
धामगर्भप्रमाणेन स्वपीठे कल्पितासने ॥१६१४॥
पूर्ववन्न्यासहोमादि विधाय ध्यानपूर्वकम् ।
संस्नाप्य विधिवत्तत्र ब्रह्माङ्गैः पूजयेत्ततः ॥१६१५॥
अङ्गानि पूर्वमुक्तानि ब्राह्माणि त्वधुना यथा ।
ॐ चैं सद्योजाताय हूं फट् नमः, ॐ चैं तत्पुरुषाय हूं फट् नमः,
ॐ चों प्रशमनाय हूं फट् नमः ।
जपं निवेद्य संतर्प्य विज्ञाप्य नुतिपूर्वकम् ।१६१६॥
देवः संनिहितो यावत्तावत्त्वं संनिधौ भव ।
न्यूनाधिकं च यत्किंचित्कृतमज्ञानतो मया ॥१६१७॥
त्वत्प्रसादेन चण्डेश तत्सर्वं परिपूरय ।
बाणलिङ्गे चले लोहे सिद्धलिङ्गे स्वयम्भुवि ॥१६१८॥
प्रतिमासु च सर्वासु न चण्डेऽधिकृतिर्भवेत् ।

सद्वैतभावनायुक्तं स्थण्डिले च विधावपि ॥१६१९॥
एवं संस्थाप्य चण्डेशं चण्डदोषनिवृत्तये ।
यजमानं सबन्धुं च सभार्यं सपरिग्रहम् ॥१६२०॥
पूर्वस्थापितकुम्भेन स्थापयेत्स्थापकद्वयम् ।
स्थापकं यजमानोऽपि संपूज्य च महेशवत् ॥१६२१॥
वित्तशाठ्यं विना दद्याद्भूहिरण्यादिदक्षिणाम् ।
यथा सन्तोषमायाति तथा पूज्यो गुरुस्ततः ॥१६२२॥
असन्तुष्टो गुरुर्यस्मान्न कर्तुस्तत्फलं भवेत् ।
मूर्तिपान्विधिवत्पश्चाज्जापको ब्रह्मणा तथा ॥१६२३॥
दैवज्ञं शिल्पिनं भक्त्या संपूज्य दक्षरे ततः ।
कर्मिदीनान्धकक्लिष्टान्सर्वानेतांश्च भोजयेत् ॥१६२४॥
स्थापक ........................ ।
प्रतिमालिङ्गवेदीनां यावन्तः परमाणवः ॥१६२५॥
तावद्युगसहस्राणि कर्तुर्भोगभुजः फलम् ।
यदत्र संमुखीभावैर्बोधितो भगवन्मया ॥१६२६॥
क्षमस्व नाथ तत्सर्वं करुणाम्बुनिधे मम ।
इति विज्ञाप्य युक्ताय यजमानाय सद्गुरुः ॥१६२७॥
प्रतिष्ठापुण्यसंस्कारं स्फुरत्तारकसप्रभम् ।
कुशपुष्पाक्षतोपेतं स्वकरेण समर्पयेत् ॥१६२८॥
ततः पाशुपतं जप्त्वा प्रणम्य परमेश्वरम् ।
ततोऽपि बलिभिर्भूतान्संनिधानाय रोधयेत् ॥१६२९॥
स्थातव्यं भवता तावद्यावत्सन्निहितो हरः ।

गुरुर्वस्त्रादिसंयुक्तं गृहीयाद्यागमण्डपम् ।
अन्ये देवादयः स्थाप्या मन्त्रैः स्वागमसंभवैः ॥१६३०॥
आदित्यवर्णभेदाद्वा स्वतन्त्रव्याप्तिभाविताः ।
साध्यप्रमुखदेवाश्च सरितो ऋषयस्तथा ॥१६३१॥
क्षेत्रपाः किन्नराद्याश्च पृथिवीतत्त्वमाश्रिताः ।
स्थानं सरस्वतीलक्ष्मीवेदीनामम्भसि क्वचित् ॥१६३२॥
भुवनाधिपतीनां च स्थानं यत्र व्यवस्थितिः ।
अण्डबुद्धिप्रधानान्तं तत्त्वमेकं त्रिकं हरेः ॥१६३३॥
नरीशगणमातृणां यक्षभाष्यादिजन्मिनाम् ।
अण्डपीबुद्धिविद्यान्तं त्रितत्त्वं परिकीर्तितम् ॥१६३४॥
मायासादैवशक्त्यन्तं त्रितत्त्वं ब्रह्मणः पदम् ।
तन्मात्रादिप्रधानान्तं तत्त्वमेकं त्रिकं हरेः ॥१६३५॥
पदमीश्वरपर्यन्तं व्यक्तार्चासु च कीर्तितम् ।
कूर्माद्यं कीर्तितं यच्च यच्च रत्नादि कीर्तितम् ॥१६३६॥
प्रक्षिपेत्पीठगर्भायां तच्च ब्रह्मशिलां विना ।
षड्भिर्विराजिते गर्भे त्यक्त्वा भागं च पृष्ठतः ॥१६३७॥
स्थापने पञ्चमांशेन यदि वा वसुभाजिते ।
स्थापनं सप्तमे भागे प्रतिमासु सुखावहम् ॥१६३८॥
धारणाभिर्विशुद्धिः स्यात्स्थापने लेपचित्रयोः ।
स्नानादि मानसं तत्र शिलारत्नादिवेशनम् ॥१६३९॥
नेत्रोद्घाटनमत्रेष्टं [1]सामानादिप्रकल्पनम् ।

१ 'ष्टमासनादि' ख. ।

पूजा निरम्बुभिः पुष्पैर्यथा चित्रेण दुष्यते ॥१६४०॥
विधिस्तु बाणलिङ्गेषु संप्रत्येव निगद्यते ।
पञ्चभिर्वा त्रिभिर्वापि पृथक् पीठे विभाजिते ॥१६४१॥
भागद्वयेन चार्चांशो भवेद् भागत्रयेण वा ।
सपीठेष्वपि तद्वत्स्याल्लिङ्गेषु किंत्वभेदतः ॥१६४२॥
इष्टमन्त्रेण संस्कारो विधेयः स्फटिकादिषु ।
किंचिद्ब्रह्मशिला तत्र प्रसूतैश्च निवेदयेत् ॥१६४३॥
योजनं पिण्डिकायाश्च मनसा परिकल्पयेत् ।
स्वयंभूबाणलिङ्गानां नियमः पीठसंस्कृतौ ॥१६४४॥
मूर्तिप्रभृतिविन्यासे न दृष्टो नियमः क्वचित् ।
स्नपनं संहितामन्त्रैर्न्यासहोमं च कारयेत ॥१६४५॥
नदीसमुद्ररोहाणां स्नपनं पूर्ववन् मतम् ।
ऐहिकं मृण्मयं लिङ्गं पैष्टिकादि च तत्क्षणम् ॥१६४६॥
कृत्वा संपूजयेच्छुद्धं वीक्षणादिविशुद्धितः ।
समाधाय ततो मन्त्रानात्मसंस्थान्विधाय च ॥१६४७॥
तज्जले प्रोक्षयेल्लिङ्गं वत्सरान्कामदं भवेत् ।
उक्तं च स्थापनं शम्भोः श्रीमता सोमशंभुना ॥१६४८॥
इति शम्भुस्थापनम् । अथ गौरीप्रतिष्ठा ---
गौर्यादिस्थापनं यच्च तदिदानीं निगद्यते
अथ गौरीप्रतिष्ठायां विधानमभिधीयते ॥१६४९॥
संस्थाप्य पूर्ववद्देवीं शय्यायामधिरोप्य च ।
शिलामालभ्य भालान्ते नमश्च हृदयान्तगम् ॥१६५०॥

हृदयान्नाभिपर्यन्तं मत्यादिविनिवेशनम् ।
शक्तिं परापरां न्यस्य हुत्वा जप्त्वा च पूर्ववत् ॥१६५१॥
सन्धाय च तथा पिण्डीं क्रियाशक्तिस्वरूपिणीम् ।
अशेषव्यापिकां ध्यात्वा न्यस्तरत्नादिकां तथा ॥१६५२॥
एवं संस्थाप्य तां पश्चाद्देवीं तस्यां नियोजयेत् ।
पराशक्तिस्वरूपां तां स्थाणुना सृष्टियोगतः ॥१६५३॥
ततो न्यसेत्क्रियाशक्तिं पीठं ज्ञानं च विग्रहम् ।
ततोऽपि व्यापिनीं शक्तिं समावाह्य नियोजयेत् ॥१६५४॥
अमुकोश्रीतिनाम्ने च समालभ्य प्रपूजयेत् ।

ततो मन्त्राः । ॐ आं आधारशक्तये नमः, ॐ इं कन्दराय नमः, ॐ ऊं नालाय नमः, ॐ ऋं धर्माय नमः, ॐ ॠं ज्ञानाय नमः, ॐ ऌं वैराग्याय नमः, ॐ ॡं ऐश्वर्याय नमः, ॐ ऋं अधर्माय नमः, ॐ ॠं अज्ञानाय नमः, ॐ लृं अवैराग्याय नमः, ॐ ॡँ अनैश्वर्याय नमः, ॐ अः ऊर्ध्वच्छादनाय नमः। ॐ हां पद्माय नमः, ॐ हं केसरेभ्यो नमः, ॐ हं कर्णिकायै नमः, ॐ हं पुष्करेभ्यो नमः, ॐ हं प्राच्यै नमः, ॐ ह्रीं ज्ञानवत्यै नमः, ॐ ह्रूं क्रियायै नमः, ॐ ह्ॡं वामायै नमः ॐ हॡं वागीश्वर्यै नमः, ॐ ह्रीं ज्वालिन्यै नमः, ॐ ह्रों ज्येष्ठायै नमः, ॐ ह्रों रौद्र्यै नमः, इति सर्वशक्तयः ॥ ॐ गां गौर्यासनाय नमः, ॐ गों गौरी मूर्तये नमः, । ॐ ह्रीं सः महागौरि रुद्रदयिते स्वाहा इति मूलमन्त्रः। गां हृदयाय नमः, गीं शिरसे स्वाहा, गूँ शिखायै वषड्, गैं

कवचाय हुं, गौं नेत्रेभ्यो वौषट्, गः अस्त्राय फट्।
ॐ सीं ज्ञानशक्तये नमः, ॐ सुं क्रियाशक्तये नमः।
लोकपालमन्त्रास्तु पूर्वोक्ताः। ऐं सहैं सुभगायै नमः।
ॐस्हिं ललितायै नमः। ॐ स्हं कामिन्यै नमः। ॐ स्हौं
काममालिन्यै नमः। इत्येता गौरीसमानसख्यः॥

अथ सूर्यप्रतिष्ठा —

अथादित्यप्रतिष्ठायां पूर्ववन्मण्डलादिकम्।
स्थानादिकं च संपाद्य पूर्वोक्तविधिना ततः ॥१६५५॥
विद्यान्तासनशय्यायां साङ्गं विन्यस्य भास्करम्।
त्रितत्त्वं विन्यसेत्तत्र चेश्वरं खादि पञ्चकम् ॥१६५६॥
शक्त्या च सर्वतोमुख्या संस्थाप्य विधिना ततः।
स्वाणुना विधिवत्सूर्यं शक्त्यन्तं स्थापयेद्गुरुः ॥१६५७॥
स्वाहान्तमथवादित्यं पदान्तं नाम धारयेत्।
सूर्यमन्त्रास्तु पूर्वोक्ता द्रष्टव्या स्थापनेन च ॥१६५८॥

अथ विष्णुस्थापनम् —

अथ संस्थापने विष्णोः प्रागुक्तं मण्डपादिकम्।
कुर्यात्स्नानादिकं तत्र भद्रपीठं तु हास्तिकम् ॥१६५९॥
ॐ आं ईं ऊं तथा एं च औं च अश्च ध्रुवादिकाः।
सचतुर्थीकरण्यन्तः पद्मं च हृदये शिरः ॥१६६०॥
शिखायै कवचं नेत्रमस्त्रमेतैस्तु मध्यमैः।
मन्त्रा भवन्ति पद्माद्याः क्रमात्सप्तैव ते यथा ॥२६६१॥
ॐ नमस्तु भवेदादौ मध्ये भगवते नमः।

वासुदेवाय इत्यन्ते मूलमन्त्रः प्रकीर्तितः ॥१६६२॥
अथान्तरेण रूपेण यो वै मन्त्रः समीरितः ।
स एवानेन मन्त्रेण विष्णुः साक्षाद्व्यवस्थितः ॥१६६३॥
मण्डपादिषु संस्कारो दिगीशावाहनादिके ।
कृत्वा हृदा हृदस्त्रेण गायत्र्या कवचेन च ॥१६६४॥
देवस्य स्नपनं लक्ष्म पुनः स्नानं यथाक्रमम् ।
विधाय परिधानं च दत्त्वा पूर्ववदासनम् ॥१६६५॥
मूर्तिरूपं च शय्यायां निवेश्य तदनन्तरम् ।
द्वादशाक्षरमन्त्रस्य कृत्वा न्यासमनन्तरम् ॥१६६६॥
ज्वालामालाकुलश्वेत-मेचकादित्यसप्रभम् ।
पीतशुक्लारुणश्वेत-विद्युत्पीतसितारुणम् ॥१६६७॥
ओंकारादियकारान्तान्वर्णान् द्वादश विन्यसेत् ।
स्वयम्भूपञ्चरात्रे च सर्वमेतदुदीरितम् ॥१६६८॥
ततः खड्गं शिखायां च मस्तके शार्ङ्गमेव च ।
चतुर्थ्यन्तनमोऽन्तेन स्वनाम्ना ध्रुवयोगिना ॥१६६९॥
मन्त्रेणैवं विधायाथ बाहोश्च मुसुलं हलम् ।
प्रणवाद्येन जं यं नं थं चक्रमध्यवर्तिनम् ॥१६७०॥
नमोऽन्तेनाणुना चक्रं नाभौ जठरपृष्ठयोः ।
ध्रुवपूर्वेण चं सं खं शंखाय च नमोऽणुना ॥१६७१॥
अनेन शिश्नमेढ्रे च गुरुः शङ्खं निवेशयेत् ।
प्रणवपूर्वं खं चं हं थं गदायै नमोऽणुना ॥१६७२॥
पद्मं च पद्ममन्त्रेण गुल्फपादेषु निक्षिपेत् ।

शिरसि केशवं वक्त्रे नारायणं च माधवम् ॥१६७३॥
कुक्षौ त्रिविक्रमं कट्यां वामनं जङ्घयोः पुनः ।
श्रीधरं च हृषीकेशं पद्मनाभं च पादयोः ॥१६७४॥
दामोदरं च सर्वैतान्मूर्तिभूतान्विनिक्षिपेत ।
द्वादशाक्षरमन्त्रैको काक्षरादिकसंज्ञया ॥१६७५॥
द्वितीयं हृदयाद्यं तु प्रोच्यते सांप्रतं यथा ।
हृद्यादिनमोऽन्तैश्च हूं हूमित्यादिकैस्तथा ॥१६७६॥
मन्त्रो हृदयसंज्ञः स्याद्विष्णवे च नमः पुनः ।
शिरोऽभिधानको मन्त्रः प्रसिद्धश्च शिवागमे ॥१६७७॥
प्रणवान्तनमोऽन्तं च ब्रह्मणेति ध्रुवेति च ।
शिखावरक्रमादस्त्रं ॐचक्रेति फडन्तगम् ॥१६७८॥
............ क्रमं च गायत्री सावित्रीत्यभिधाय च ।
प्रणवादिनमोन्ताश्च त्त्रुद्रूपायेति मध्यगाः ॥१६७९॥
पिङ्गास्त्रमिति विज्ञेयो मन्त्रः सप्ताक्षरः शुभः ।
चतुर्थ्यन्तचतुर्थ्यन्तान्मत्रानेतान् हृदादिकान् ॥१६८०॥
गायत्रीमथ सावित्रीं नेत्रयोर्वामदक्षय ः ।
विन्यस्य तदितरचक्रं द्वादशारं सुभास्वरम् ॥१६८१॥
तस्य मध्ये पुनर्देयं पद्ममध्यं दलं ततः ।
हृदन्तं कर्णिकायां च शिरः पूर्वदले स्थितः ॥१६८२॥
शिखां च दक्षिणे पार्श्वे कवचं पश्चिमे न्यसेत ।
अस्त्रमुत्तरतो न्यस्य गायत्रीमग्निपत्रके ॥१६८३॥
सावित्रीमीशपत्रे च पैङ्गलास्त्रं विनिक्षिपेत् ।

गर्भावरणमित्युक्तमधुनावरणान्तरम् ॥१६८४॥
द्वादशारे च चक्रेऽस्मिन्केशवाद्यान्यथाक्रमम् ।
प्रणवाद्यैर्यथाकालमुक्तरूपं स्वनामभिः ॥१६८५॥
शङ्खं चक्रं च पद्मं च हलं च मुसलं ततः।
शार्ङ्गं च विन्यसेदेवं तृतीयावरणे भवेत् ॥१६८६॥
पुष्पधूपसुनैवेद्यैर्वस्त्रालङ्करणादिभिः ।
ततः समाहितो मन्त्री साङ्गं देवं च पूजयेत् ॥१६८७॥
पञ्चमूर्त्यात्मके न्यासे मूलमन्त्रं भवेद्यथा ।
नमोऽन्ते वासुदेवाय ओं अ इत्यादिकास्तथा ॥१६८८॥
ओं अं आं इं ईं तथा उं ऊं ओं अः औं युग्मपूर्वतः ।
संकर्षणप्रद्युम्नानिरुद्धनारायणाः क्रमात् ॥१६८९॥
नमोऽन्ताश्च चतुर्थीकान्मूर्तीशान्मूर्तयः पुनः ।
पञ्च क्षित्यादयोऽङ्गानां विन्यासोऽत्रापि पूजनम् ॥१६९०॥
अष्टमूर्त्यादिपक्षेऽपि प्रोक्ता एव तदीश्वराः ।
सहस्रं मूलमन्त्रस्य तदर्धमथवा गुरुः ॥१६९१॥
पूर्णावसानकं हुत्वा जप्त्वा श्रोत्रेण मन्त्रवित् ।
पूर्ववच्च बलिं दत्त्वा यागदोषनिवृत्तये ॥१६९२॥
हुत्वा च व्याहृतिं तद्वत्स्कुर्यात्पिण्डकां ततः ।
लक्ष्म्यै नमोऽवसाने ओं घं धं भं ढं फमादिना ॥१६९३॥
मन्त्रेणानेन संचिन्त्य लक्ष्मीभूतां च पूर्ववत् ।
एतैश्च पञ्चसंख्याकैरेतन्मन्त्रव्यवस्थितैः ॥१६९४॥
अक्षरैर्हृच्छिरश्चूडा–वर्मनेत्राभिधायकैः ।

हूंफडन्तैः समासेन संप्रदायेन वा क्वचित् ।
संस्कृतां तामिमां प्राग्वत् प्रासादेनशयेत्ततः ? ॥१६६५॥
प्रकृतिं व्यापिनीं न्यस्य लक्ष्मीमन्त्रेण पिण्डिकाम् ।
पूर्ववन्न्यस्तमन्त्रां च ततश्च द्वादशाक्षरम् ॥१६६६॥
पुरुषान्तं समुच्चार्य पीतवासं चतुर्भुजम् ।
शङ्खचक्रगदाशार्ङ्गपाणिं च वनमालिनम् ॥१६६७॥
विष्णुं संस्थापयेत्तत्र चक्रं पद्मासनं ततः ।
नमोऽन्तं व्यापकं तत्र मूर्तिमूर्त्यङ्गकांस्तथा ॥१६६८॥
तन्मात्रं स्वात्मतत्त्वं च विद्यातत्त्वं प्रधानकम् ।
पुरुषान्तं भवेदीशं विभाव्यैवमतः परम् ॥१६६९॥
परापरं समावाह्य देवं साधारणान्वितम् ।
संपूज्य विविधद्भक्त्या शेषं पूर्ववदाचरेत् ॥१७००॥
स्वाम्यन्तं साधनान्तं च कर्तृनाम्ना च संयुतम् ।
द्वाराश्रितप्रतिष्ठायामिदानीं विधिरुच्यते ॥१७०१॥
द्वाराङ्गानि कषायाद्यैः संस्कृत्य शयने न्यसेत् ।
मूलमध्याग्रभागेषु त्रयमात्मादिसेश्वरम् ? ॥१७०२॥
विन्यस्य संनिरोध्याथ हुत्वा जप्त्वानुरूपतः ।
द्वारादधो यजेद्वास्तुं तत्रावान्तरमन्त्रतः ॥१७०३॥
रत्नादिपञ्चकं न्यस्य शान्तिहोमं विधाय च ।
यवसिद्धार्थकाक्रान्ता ऋद्धिवृद्धिसहातिलाः ॥१७०४॥
गोमृद्दरदनगेन्द्रमोहनीलक्ष्मणामृता ।
रोचनारध्वधो दूर्वामाशां दध्नश्च पोटलीम् ? ॥१७०५॥

कृतस्तदुच्चरेद्बद्ध्वा रक्षार्थं प्रणवेन वा ।
द्वारमुत्तरतः किंचिदाश्रितं संनिवेशयेत् ॥१७०६॥
आत्मतत्त्वमधो न्यस्य विद्यातत्त्वं च शाखयोः ।
शिवमाकाशदेशे च व्यापकं सर्वपुद्गले ॥१७०७॥
ततो महेशनाथे च विन्यसेन्मूलमन्त्रतः ।
द्वाराश्रितांश्च नन्द्यादीन् हृत्संयुक्तस्वनामभिः ॥१७०८॥
जुहुयाच्छतमर्धं वा द्विगुणं शक्तितोऽथ वा ।
न्यूनातिदोषमोक्षार्थं हेतितो जुहुयाच्छतम् ॥१७०९॥
दिग्बलिं पूर्वतो दत्त्वा प्रदद्याद्दक्षिणादिकम् ।
अथ प्रासादचैतन्यसंबन्धो दर्श्यतेऽधुना ॥१७१०॥
शुकनासासमाप्तौ तु पूर्ववेद्याश्च मध्यतः ।
आधारशक्तितः पद्मं विन्यस्य प्रणवेण तु ॥१७११॥
स्वर्णाद्येकतमोद्भूतं पञ्च............शत......... ।
मधुक्षीरयुतं कुम्भं न्यसेत्पश्चादिपञ्चकम् (?) ॥१७१२॥
चूतादिपल्लवास्यं (द्यं) च हृदा हृत्पद्मवन्न्यसेत् ।
पूरकेण समादाय सकलीकृतविग्रहः ॥१७१३॥
सर्वात्माभिन्नमात्मानं स्वाणुना भिन्नमारुतः ।
आज्ञया बोधयेच्छम्भो रेचकेन ततो गुरुः ॥१७१४॥
द्वादशान्तात्समादाय स्फुरद्वह्निकणोपमम् ।
निक्षिप्य कुण्डमध्ये च न्यस्य तत्रातिवाहिकम् ॥१७१५॥
विग्रहे तद्गुणानां च बोधकं च कलादिकम् ।
क्षमान्तं च स्वेश्वरं तत्त्वव्रातं तत्र निवेशयेत् ॥१७१६॥

दशनाडीदशप्राणानिन्द्रियाणि त्रयोदश ।
तदधिपांश्च संपूज्य प्रणवाद्यैः स्वनामभिः ॥१७१७॥
स्वकार्यकारकत्वेन मायाकलनियामिकाः ।
विश्वेशानपूरकाञ्शम्भुं व्यापिनं च स्वशम्बरैः ॥१७१८॥
अङ्गानि च विनिक्षिप्य निरुन्ध्याद्रोधमुद्रया ।
स्ववर्णाद्युद्भवं यद्वा पुरुषं पुरुषान्तगम् ॥१७१९॥
पञ्चगव्यकषायाद्यैः पूर्ववत्संस्कृतं ततः। ।
शय्यायां च समारोप्य ध्यात्वा रुद्रमुमापतिम् ॥१७२०॥
तस्मिंश्च शिवमन्त्रेण व्यापकत्वेन विन्यसेत् ।
संनिधानाय होमं च प्रोक्षणं स्पर्शनं जपम् ॥१७२१॥
सांनिध्यं रोधनं सर्वं भागत्रयविभागतः ।
त्रिधायैवं प्रकृत्यन्तं कुम्भे तं विनिवेशयेत् । ॥१७२२

इति हृत्प्रतिष्ठा । ध्वजारोपणम्—

मूलके ध्वजदण्डे च ध्वजे देवकुले तथा ।
प्रतिष्ठा च यथोद्दिष्टा तथेदानीं निगद्यते ॥१७२३॥
के भागार्धप्रदेशाद्वा सर्वासर्वप्रवेशनम् ।
ऐष्टिके दारुजं शूलं शैलजे धाम्नि शैलजम् ॥१७२४
कर्तव्यं लिङ्गमानेन लिङ्गं वा प्रोक्तमानतः ।
शंभुस्त्रिशूलयुक्तस्तु ग्रहचूलाविधो .......... ॥१७२५॥
एष मूलः समाख्यातो मूर्ध्नि लिङ्गसमन्वितः ।
बीजपूरकयुक्तो वा शिवशास्त्रेषु तद्विधः ॥१७२६॥
चित्रे ध्वजश्च जङ्घा ते यद्वा जङ्घा ततो भवेत्

............... यदि वा च यथेच्छया ।
महाध्वजः समाख्यातो यस्तु ............ ॥१७२७॥
कार्यः शुभस्तदुत्थो वा स भवेत्सर्वकामदः ।
अयमारोप्यमाणस्तु भङ्गमायाति वा यदि ॥१७२८॥
राज्ञे नेष्टे विजानीयाद्यजमानस्य वा तदा ।
मन्त्रेण बहुरूपेण पूर्ववच्छान्तिमादिशेत् ॥१७२९॥
द्वारपालादिपूजां च मन्त्राणां तर्पणं यथा ।
विधाय चूलकं दण्डं स्नापयेदस्त्रमन्त्रतः ॥१७३०॥
अनेनैव तु मन्त्रेण ध्वजं संप्रोक्ष्य देशिकः ।
मृत्कषायादिभिः स्नानं प्रासादं कारयेत्ततः ॥१७३१॥
विलिप्य च समाच्छाद्य शय्यायां न्यस्य पूर्ववत् ।
चूलको लिङ्गवन्यासो न च ज्ञानी न च क्रिया ॥१७३२॥
विशेषान्नं चतुर्थी च न च चण्डस्य कल्पना ।
चण्डस्तथात्मतत्त्वं च विद्यातत्त्वं द्वितीयकम् ॥१७३३॥
सद्योजातादिवक्त्राणि शिवतत्त्वे पुनर्ध्वजे ।
निष्कलं च शिवं तत्र न्यस्याङ्गानि प्रपूजयेत् ॥१७३४॥
चूलके च ततो मन्त्री सांनिध्ये संहिताणुभिः ।
होमयेत्प्रतिभागं तु ध्वजे तैस्तु फडन्तगा ॥१७३५॥
अन्यथापि कृतं यच्च ध्वजसंस्करणं क्वचित् ।
अस्त्रयागं विधायैवं तत्सर्वमुपदर्शितम् ॥१७३६॥
प्रासादे कारितस्नाने स्रग्वस्त्रादिविभूषिते ।
जङ्घावेदी तदूर्ध्वेषु त्रितत्त्वादि निवेश्य च ॥१७३७॥
होमादिकं विधायाथ शिवं संपूज्य पूर्ववत् ।

सर्वतत्त्वमयं ज्ञात्वा शिवं च व्यापकं न्यसेत् ॥१७३८॥
अनन्तं कालभद्रं च विभाव्य च पदाम्बुजे।
कूष्माण्डहाटकौ पीठे पातालनरकैः सह ॥१७३९॥
भुवनैर्लोकपालैश्च शतरुद्रादिभिर्वृतम्।
ब्रह्माण्डमिति ध्यात्वा जङ्घायां च विभावयेत् ॥१७४०॥
वारितेजानलव्योम पञ्चाष्टकसमन्वितम्।
सप्तावरणसंज्ञं च बुद्धि...... ष्टकान्वितम् ॥१७४१॥
......यौष्टकसमायुक्तं नाम्नोपरि गुणत्रयम्।
वास्तुपुरुषसिंहेन न च ......परिभावयेत् ॥१७४२॥
मञ्जरीवेदिकायां तु विद्याष्टकचतुष्टयम्।
...................... दण्डे नादं विभाव्य च ॥१७४३॥
ध्वजे च कुण्डलीशक्तिमिति तत्र विभावयेत्।
जगत्या धाम संगाय लिङ्गे पिण्डकयाथवा ॥१७४४॥
पूर्ववत्सर्वमत्रापि विधानमुपकल्प्य च।
तूर्यमङ्गलनिर्घोषैर्वेदध्वनिसमन्वितैः ॥१७४५॥
शिवमूलं ध्वजं दण्डं गुरुर्मूर्तिधरैः सह।
समुत्थाय समन्त्रैश्च विन्यस्ते शक्तिपङ्कजे ॥१७४६॥
न्यस्तरत्नादिके तत्र स्वाधारे विनिवेशयेत्।
यजमानो ध्वजे लग्ने बन्धुमित्रादिभिः सह ॥१७४७॥
धाम प्रदक्षिणीकृत्य लभते फलमीहितम्।
गुरुः पाशुपतं ध्यायश्चिरमस्त्रादिभिः सह ॥१७४८॥
अधिपान्स्वस्वयुक्तांश्च[1] रक्षणाय नियोजयेत्।

१ 'द्वन्द्व' ख-पाठः।

न्यूनातिदोषशान्त्यर्थं हुत्वा दत्त्वा च दिग्बलिम् ॥१७५०॥
गुरवे दक्षिणां दद्याद्यागदोषनिवृत्तये ।
प्रतिमालिङ्गवेदीनां यावन्तः परमाणवः ॥१७५१॥
तावद्वर्षसहस्राणि कर्तुर्भोगभुजः फलम् ।
तत्कोटिगुणितं पुण्यं प्राप्नोति ध्वजरोपणात् ॥१७५२॥
जीर्णेऽपि संस्कृते पुण्यमेतदेव प्रकीर्तितम्

इति ध्वजारोपणविधिः । अथ जीर्णोद्धारः —

जीर्णानां चललिङ्गानामुद्धारे विधिरुच्यते ॥१७५३॥
जीर्णोद्धारं विना यस्माल्लिङ्गं भूताश्रयं भवेत् ।
जीर्णाद्यमुद्धरेत्तस्मान्महापुण्यसमीहया ॥१७५४॥
तच्च जीर्णं कृशं दग्धं हीनं मानाधिकं तथा ।
लक्ष्मोज्झितं च भग्नं च स्थूलं वज्रहतं तथा ॥१७५५॥
संपुटं स्फुर्जितं व्यङ्गं लिङ्गमित्येवमादिकम् ।
इत्यादि सर्वलिङ्गानां त्याज्या पिण्डी तथा वृषम् ॥१७५६॥
चलितं चालितं विभ्रमत्युग्रं विषमस्थितम् ।
दिङ्मात्रं [1]मार्जितं लिङ्गं मध्यस्थं पतितं यथा ॥१७५७॥
एवंविधं च संस्थाप्य निर्व्रणं च भवेद्यदि ।
नद्यादिकप्रवाहेण तदपि क्रियते यदि ॥१७५८॥
ततोऽन्यदपि संस्थाप्य विधिदृष्टेन कर्मणा ।
शतेन स्थापनं कुर्यात्सहस्रेण तु चालनम् ॥१७५९॥
पूजादिभिश्च...... जीर्णाद्यमपि सुस्थितम् ।
पूजया रहितं तत्त्वं तत्रस्थमपि दुःस्थितम् ॥१७६०॥

---

१ 'दिङ्सूत्रं पालितं' ख. २ 'सुन्दरम्' ख. पाठः

सहस्राधिकहोमेन चालनं तु तदा मतम् ।
परित्यज्य शिलायोगैर्निर्भ्रंशं चललक्षणम् ॥१७६१॥
संयुक्तमुद्धरेमन्त्री तत्रैव स्थापनाय च ।
विधिना चलते यश्च प्रागुक्तफलवृद्धये ॥१७६२॥
याम्ये मण्डपमीशाने प्रत्यग्द्वारैकतोरणम् ।
विधाय द्वारपूजादिस्थण्डिलेशप्रपूजनम् ॥१७६३॥
मन्त्रान्संपूज्य संतर्प्य वास्तुदेवं च पूर्ववत् ।
दिग्बलिं च ततो दत्त्वा समाप्य च ततो गुरुः ॥१७६४॥
लिङ्गिनो भोजयेच्छैवान्द्विजान् वा तत्र कर्मणि ।
विज्ञापयेत्ततः शंभुं लिङ्ग दुष्टमिदं विभो ॥१७६५॥
अस्य चोद्धरणे शान्तिः स्यादित्यस्ति भवद्वचः ।
तस्मादत्र विधानेन ममापि तिष्ठ शङ्कर ॥१७६६॥
एवं विज्ञाप्य देवेशं शान्तिहोमं समाचरेत् ।
मध्वाज्यक्षीरदूर्वाभिर्मूलेनाष्टाधिकं शतम् ॥१७६७॥
उभौ लिङ्गौ च संस्नाप्य पूजयेत्स्थण्डिले यथा ।
ओंव्यापकेश्वरायेति नुत्यन्तशिववादिना ॥१७६८॥
ओं व्यापकेश्वर हृदयाय नमः, ओं व्यापकेश्वर शिरसे स्वाहा,
ओं व्यापकेश्वर शिखायै वषट्, ओं व्यापकेश्वर कवचाय हुम्,
ओं व्यापकेश्वर नेत्रेभ्यो वौषट्, ओं व्यापकेश्वर अस्त्राय फट्,
ततस्तत्त्वोश्रितं सर्वं श्रावयेदस्त्रमन्त्रतः
ततः कोपीह यः कश्चिल्लिङ्गमाश्रित्य तिष्ठति ॥१७६९॥
लिङ्गं त्यक्त्वा शिवाज्ञाभिर्यथेष्टं तत्र गम्यताम् ।

विद्याविद्येश्वरैर्युक्तः शंभुरत्र भविष्यति ।
सहस्रं प्रतिभागं तु ततः पाशुपताणुना ॥१७७०॥
कृत्वा शान्त्यम्बुना प्रोक्ष्य स्मृत्वा दर्भैर्जपेत्ततः।
दत्त्वार्घं च विलोमेन तत्त्वतत्त्वाधिपैस्ततः ॥१७७१॥
मूर्तिमूर्तीश्वरांल्लिङ्गपिण्डिकासंस्थितान् गुरुः ।
विसृज्य स्वकपाशेन वृषस्कन्दस्थितानपि ॥१७७२॥
रज्जु बद्ध्वा ततो नेष्ट्वा..........सूत्रंगृणा ? ।
तज्जलेन क्षिपेन्मन्त्री पुष्ट्यर्थं ..................॥१७७३॥
... ............... विधिवत्स्थापयेद्गुरुः ।
अमरैर्मुनिभिः सिद्धैस्तत्त्वविद्भिः प्रतिष्ठितम् ॥१७७४॥
जीर्णं वाप्यथवा भग्नं विधिनापि विचालयेत।
एष एव विधिः कार्यो जीर्णधामसमुद्धृतौ ॥१७७५॥
खड्गे मन्त्रगणं न्यस्य कारयेन्मन्दिरादिकम् ।
संकोचे मरण प्रोक्तं विस्तारे तु धनक्षयः ॥१७७६॥
तद्द्रव्यं श्रेष्ठद्रव्यं वा तत्कार्यं तत्प्रमाणकम्।

इति जीर्णोद्धारविधिः। अथ मठादिप्रतिष्ठा —

प्रतिष्ठा वा मठादीनां क्रमशो वाभिधीयते
मण्डपादि विधायाथ शिवकुम्भं च तद्गतम् ॥१७७७॥
विलिप्तगोमयेनैनं सबाह्याभ्यन्तरं पदम्
पुष्पस्रग्वस्त्रशोभाढ्यं कृत्वा तोरणशोभितम् ॥१७७८॥
सबन्धुर्यजमानस्य देशिकादिपुरःसरः
वस्त्रयुग्मावृतं स्कन्दे शिवकुम्भं द्विजन्मनः॥१७७९॥

वेद्वाद्यरवैर्दिव्यैः पठन् कृत्वा प्रदक्षिणम् ।
किंचिद्विलम्ब्य वा स्वाग्रे देशिकस्तापसान्वितः ॥१७८०॥
प्रतिष्ठा च यथाशास्त्रं पुष्करिण्या निगद्यते ।
तत्रादौ पूजयेद्वास्तुं वेदाश्रे रुद्रभाजिते ॥१७८१॥
कोणेषु त्रिपदाः पूज्या ईशाग्निपितृवायवाः ।
एकैकं पदमारूढाः पर्जन्याद्या यथाक्रमम् ॥१७८२॥
आपाद्याकारकोष्ठस्था मरीच्याद्या दशापराः ।
ब्रह्मा मध्ये प्रदेशे तु पञ्चविंशतिकोष्ठके ॥१७८३॥
यजेद्वास्तुप्रतिष्ठायां वारुण्या मण्डपे शुभे ।
परिगृहीतभूमध्ये प्रारम्भे तु यथाविधि ॥१७८४॥
ततो मूर्त्यङ्गसंयुक्तं निजनाम्ना ध्रुवादिना ।
अष्टपत्रे सिताम्भोजे कालाग्निं मध्यतो यजेत् ॥१७८५॥
हाटकेशबलेशातिबलानथ महोदरम् ।
महाब्धिकलशाम्भोधिं विरूपाक्षं च पूजयेत ॥१७८६॥
पूर्वपत्रक्रमादीशे भ्रकुटीश्वरमष्टमम् ।
अनन्तादींस्ततो गर्भे कार्कोटान्तोभिजाणुभिः ॥१७८७॥
यज्ञमण्डलबाह्ये तु प्रजपेच्चरकीमुखम् ।
अस्त्रं लोकाधिपांश्चाथ रौप्यं नागाष्टकं तथा ॥१७८८॥
तत्रानन्तं महापद्मं तक्षकं कुलिकाह्वयम् ।
शंखं च वासुकिं पद्मं कार्कोटं चाष्टम स्मृतम् ॥१७८९॥
पूजां शर्वादितः कृत्वा न्यसेत्तस्यां महौषधीः ।
बलात्युशीरसर्पाक्षी महायक्षामृताप्रिया ॥१७९०॥

कमठं पञ्चरत्नानि रसं सङ्घाम्बुपङ्कजम् ।
अर्घाम्बु पञ्चगव्यं च पुष्करिण्यां परिक्षिपेत् ॥१७६१॥
खाततो द्विगुणं पादहीनमर्धेन चाधिकम् ।
दृढां लोचनसंयुक्तां मालसुन्दरिकादिजाम् ? ॥१७६२॥
स्नापयित्वा समभ्यर्च्य सद्घोषैस्तूर्यनिःस्वनैः ।
अनन्तमणुना मध्ये निक्षिपेदिह यष्टिकाम् ॥१७६३॥
ॐ सहस्रभोगजूटाय विश्वाधारस्थिताय च ।
हूं हूमनन्तनाथाय नागाधिपतये नमः ॥१७६४॥
अभ्युक्ष्यास्त्राम्बुना पाशुपतास्त्रेणाधिवासयेत् ।
क्षुरिकायावतार्याथ क्षिपेद्वासेन वारिणि ॥१७६५॥
रौप्यं पाशं समादाय कपिलां पृष्ठसङ्गतः ।
यजमानस्तरेत्तस्यां गुरुः पाशुपतं पठेत् ॥१७६६॥
तत्र संतरणात्तेन तीर्णा वैतरणी नदी ।
शतं साष्टमघोरेण हुत्वा संतर्प्य वारुणम् ॥१७६७॥
देवं च वामदेवाख्यं चरुं तेनैव साधयेत् ।
वरुणे शिवमन्त्रेण दत्त्वा पूर्णाहुतिं गुरुः ॥१७६८॥
गोद्वयं गुरवे देयं वस्त्रस्रग्भूषणानि च ।
अमुमेव विधिं कुर्याद् गुरुर्वापीतडाकयोः ॥१७६९॥

अथ कूपप्रतिष्ठा —

अथ कूपप्रतिष्ठापि संक्षेपादुपदिश्यते ।
अत्रापि पूजयेद्वास्तुं बिम्बे भास्करभाजिते ॥१८००॥

ईशखाग्नीमृगश्चैव पितृभोगमरुत्पतिः ।
ईशादीशान्तकोणेषु सार्धद्विपदनायकः ॥१८०१॥
पर्जन्याद्यास्तु पादस्था आपाद्याः पादयुग्मगाः ।
भानुभाद्या मरीच्याद्या ब्रह्मा षट्त्रिंशदंशगः ॥१८०२॥
चरक्याद्या बहिः पूज्याः स्कन्दाद्याश्चापि पूर्ववत् ।
यजेत्कालाग्निमम्भोजे कूपाद्वारुणमण्डपे ॥१८०३॥
पूर्वोक्तेन विधानेन रौप्यनागाष्टकं बृहत् ।
हुत्वा तेभ्यो बलिं दत्त्वा कूपे रत्नादि निक्षिपेत् ॥१८०४॥
प्रोक्ष्याच्छाद्याम्बुना शान्त्यै यजमानं ततो गुरुः ।
गुरुं सन्तोषयेत्कर्ता गोहिरण्याम्बुनादिभिः ॥१८०५॥
भोजनानि ततो दद्याद्यथासामर्थ्यमर्थिनाम् ।
कूपवत्सर्वखातानां विधिः कार्यो विजानता ॥१८०६॥

इति कूपप्रतिष्ठा ॥

अथ वृक्षप्रतिष्ठायां हवनं सघृतैस्तिलैः ।
आरामोद्यानयोर्वृक्षान्पूर्वेशादिशि मण्डले ॥१८०७॥
स्नपनं पूजनं न्यासं स्वेन स्वेनाणुना चरेत् ।
वृक्षाधिदेवताप्रीत्यै दद्यात्पूर्णाहुतिं गुरुः ॥१८०८॥
कर्ता संतोषयेत्पश्चादाचार्यान्ब्राह्मणानपि ।
बन्धून् मित्राणि दीनांश्च भोजयेत्तोषयेदपि ॥१८०९॥

श्रीशैवशासनमहाम्बुधिरत्नभूत-
सर्वोत्तमाधिकरणैकरणैकचेताः ।

गार्ग्ये कुले समुदितो विततावदात-
विद्याविशेषकुशलश्रुतशीलवान्यः ॥१८१०॥
श्रीमानसौ सोमशिवाभिधानो
दिक्चक्रवालोदरगीतकीर्तिः ।
शैवागमज्ञो [1]मुनिवृन्दवन्द्य-
श्चक्रे क्रियाकाण्डपदक्रमावलीम् ॥१८११॥
[2]क्व तावकीनागमबोधविक्लवा-
द्वयं क्व शैवागमसारपद्धतिः ।
व्यदव्ध चैनां खलु सर्वकारणं
त्वदिच्छयैवेति शिव क्षमस्व मे ॥१८१२॥
श्रीविक्रमार्कनृपकालसमुद्भवेषु
शून्याग्निभिः समधिकेषु च तच्छतेषु ।
एकादशस्वमलशास्त्रमिदं(११३०) समस्तं
ग्रन्थस्य देशिकमतस्य सहस्रयुग्मम् ॥१८१३॥
ईशाननामा शिवतुल्यधामा
तस्यापि शिष्यो विमलेशनामा ।
तस्यापि शिष्यः स शिवाभिधान-
स्तस्यापि शिष्यः खलु सोमशंभुः ॥१८१४॥
इति सोमशम्भुसंगृहीता
कर्मकाण्डक्रमावली समाप्ता ॥

---

१ 'बुधभूत' ग. । २ 'कृतानुकारोगमवेधिविक्लवाद्वयं' ग. ।